सम्भवोऽस्ति" इति भाष्ये उक्तम्। शब्दस्य प्रत्यक्षपरोक्षत्वयोर्विशेषणतायामिति तदर्थः। नन्वेवमिति प्रतीकं धृत्वा 'प्रत्ययप्रकृतिशब्दस्योच्चार्यमाणस्यानुभूतत्वात्परोक्षत्वासम्भवस्ततो यथा प्रत्यक्षत्वमव्यभिचाराच्छब्दस्य विशेषणं न सम्भवति एवं परोक्षत्वमप्यसम्भवादविशेषणमित्यर्थः' इति कैयटः।

यत्तु गुरवः(१) स्वबोध्यपदबोध्यत्वसम्बन्धेन द्विरेफपदमेव भ्रमरत्वजातिविशिष्टमुपस्थापयतीति लक्षणैवैषा रूढिमती न तु लक्षितलक्षणाख्यस्तद्भेदोऽस्तीति तत्खण्डयति—*न चेति*।*पदेति*-पदविशेषेत्यर्थः। अनतिप्रसङ्गायाह—*वाच्यत्वेति*। *पदम्*—पदमेव। न्यायमतान्यमतेराह—*बीजत्वाच्चेति*। तत्त्वस्य दृष्टत्वाच्चेत्यर्थः। अत एव "प्रयोजनं न लक्ष्यं सम्बन्धाभावात्" इति प्रकाशादावुक्तम्।

लक्ष्यं न मुख्यं नाप्यत्र न च शब्दः स्खलद्गतिः।
एवमप्यनवस्था स्याद्या मूलक्षयकारिणी॥
प्रयोजनेन सहितं लक्षणीयं न युज्यते।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्॥
विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते।

इत्यन्तेन। तस्माच्छक्तिविशेष एव लक्षणा, न त्वतिरिक्ता सेति, तथावदन्तो निखिलतान्त्रिका उक्तमहाभाष्याद्यनवधाननिबन्धनेनाज्ञा एवेति बोध्यम्। तदाह—*इति दिगिति*।

**मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धसंस्कारविशेषो व्यञ्जना। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यञ्जकता च हर्यादिभिरुक्ता। द्योतकत्वं च क्वचित्समभिव्याहृतपदीयशक्तिव्यञ्जकत्वमिति वैयाकरणानामप्येतत्स्वीकार आवश्यकः। एषा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र तथैवानुभवात्। वक्त्रादिवैशिष्ट्यादिज्ञानं व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः॥**

---

(१) स्वबोध्यपदविशेषवाच्यत्वसम्बन्धेनेति, हस्तलिखितपुस्तके पाठः।

(कु०टी०) लक्षणयैव व्यञ्जना गतार्थेति तार्किकमतं निराकर्तुमाह—*मुख्यार्थेति* । "निश्शेषच्युतचन्दनं स्तनतटम्" इत्यादौ मुख्यार्थबाधाभावेऽपि अधमपदार्थपर्यालोचनया व्यङ्ग्यार्थप्रतीतेर्व्यञ्जना वृत्त्यन्तरमेवेति भावः । *सम्बद्धेति* । मुख्यार्थसम्बन्धाभावाद्रूढ्यादेरभावाच्च न लक्षणेत्यर्थः । *वक्त्रादीति* । वक्त्रादीनां वैशिष्ट्यस्य ज्ञानेन प्रतिभया चोद्बुद्धः संस्कार इत्यर्थः । व्यञ्जकत्वलक्षकत्वयोर्वैलक्षण्यं दर्शयति—*अत एवेति* । *निपातानामिति* । तेषां मुख्यार्थाभावेन लक्षणाया असम्भवात् । व्यञ्जकतारूपा द्योतकतैवेत्यर्थः । *स्फोटस्येति* । लक्षणायास्तु तत्र न सम्भवः । *क्वचिदिति* । यथा प्रजपतीत्यत्र प्रकृष्टजपबोधकत्वम् । प्रादेशं विलिखतीत्यत्र प्रादेशं विनिर्मायेत्यर्थेन क्रियाक्षेपकत्वादुक्तम्—क्वचिदिति । *वैयाकरणानामिति* । न केवलं कवीनामेव, किन्तु वैयाकरणानामपि व्यञ्जना आवश्यकी यतो व्यञ्जकत्वमेव द्योतकत्वमित्यर्थः । लक्षणाव्यञ्जनयोर्वैलक्षण्यान्तरमपि दर्शयति—*एषा चेति* । लक्षणा पदनिष्ठा व्यञ्जना तु एकदेशादिनिष्ठापीत्यर्थः ।

---

( क० टी० ) अथ व्यञ्जनां निरूपयति-*मुख्यार्थेति* । तत्स्वरूपेऽव्यदोषायाह-*निरपेक्षेति* । क्वचित्तत्सम्बन्धग्रहापेक्षासत्त्वात्तन्निरपेक्षत्वमादिर्वा नोक्तः । तच्च बोधविशेषणम् । तदेवाह-*मुख्यार्थेति* । एतदुभयसाधारणः प्रसिद्धाप्रसिद्धान्यतरो योऽर्थस्तद्विषयकश्चेत्यर्थः । अर्थव्यञ्जनाविषये सहकारिण आह-*वक्त्रादीति* ।

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।

इति अर्थव्यञ्जनायां प्रकाशादयः । वक्ता कविस्तन्निबद्धश्च बोद्धव्यः प्रतिपादनीयो जनः । अन्तर्भावितण्यर्थत्वात् । अतो न वाच्येनाभेदः । काकुः-शोकभीत्यादिभिर्ध्वनेर्विकारः, उच्चारयितुः शोकाद्यनुमापको जातिविशेषः । वाक्यवाच्याभ्यां सहितोऽन्यसन्निधिरिति समासेन निमित्तत्रयम् । अन्योऽत्र वक्तृबोद्धव्यभिन्नः । प्रस्तावः-प्रकरणम् । देशो विजनादिः । कालो वसन्तादिः । आदिना चेष्टालीलादिहावपरिग्रहः । वैशिष्ट्यं-वैलक्षण्यम् । तच्च वक्त्रादिषु प्रत्येकं सम्बध्यते । पञ्चम्यर्थः सहकारित्वरूपं हेतुत्वम् । तच्च तदभावे व्यञ्जनाऽनुदयाद्बोध्यम् । प्रतिभेत्यनेनेदं प्रतिपादितम् । नवनवोन्मेषशालिनी बुद्धिः प्रतिभा ।

तदुक्तम्—

प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता । इति ।

नवनवोन्मेषो जन्मान्तरीयतद्धीजनकत्वज्ञानजन्यसंस्कारोद्बोधः । वक्त्रादिवैशिष्ट्यसहकारेण तज्जनिका च बुद्धिः प्रतिभेति फलितम् ।(१) या वासनेत्युच्यते, तस्यां सत्यामेव वक्तृवैशिष्ट्यादिसत्त्वेऽपि व्यङ्ग्यप्रतीतिरिति । एवञ्च शक्तिरेतज्जन्मगृहीतैवार्थबोधिका, व्यञ्जना(२) तु जन्मान्तरगृहीतापीत्यपि शक्तेरस्याभेदकत्वम् । इदमेवाभिप्रेत्य व्यञ्जना स्वरूपसती हेतुरिति प्रवादः । अर्थस्य त्रिविधस्यापि, न तु कस्य चिदेव । अन्योऽर्थो वाच्यलक्ष्यभिन्नः । व्यक्तिर्व्यञ्जना; करणव्युत्पत्तेः । एवेन शक्तिलक्षणा निरासः । सङ्केताद्यभावादिति तदर्थः । प्रतिभादीत्यादिना(३) निपुणतादि । क्वचित्तद्रहितपाठ एव । अत्रेदं बोध्यम् । व्यञ्जनासामान्यलक्षणम् अर्थविषयकः प्रतिभोद्बुद्धः संस्कारविशेष इत्येव अनतिप्रसक्तत्वात् ।

दीक्षिताद्युक्ताद्यलक्षणामतेऽनतिप्रसङ्गायाह—*मुख्यार्थेति* मध्यमं तु स्वरूपकीर्तनम् । तृतीयं तु सहकारि । एवञ्च(४) नियन्त्रितार्थविषयकधीजनकत्वं शब्दव्यञ्जना । वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतु(५) व्यापारत्वमर्थव्यञ्जना । अर्थस्येत्यनेन शब्दव्यञ्जनानिरासः । शब्दस्य पर्यायपरिवृत्तिसहत्वाच्च तत्त्वम् । एतेषां न प्रत्येकमेव व्यञ्जकत्वं किन्तु मिलितानामपीति । *अत एव*—व्यञ्जनाया अङ्गीकारादेव । *स्फोटस्येति* । अनेकव्यक्तीत्यादिनेति भावः । ननु तत्रोपयोगेऽपि द्योतकत्वस्यान्यादृशत्वान्न तत्रोपयोगोऽत आह—*द्योतकत्वं चेति* । अन्यादृशस्याप्यग्रे वक्ष्यमाणत्वादाह-*क्वचिदिति* । प्रजपतीत्यादावित्यर्थः । अत एव पूर्वं प्राक् तस्योल्लेखः । अत एव केवलानां तेषां प्रयोगोऽसाधुः । उपसंहरन्नाह-*इति वैयेति* । अपिना नैयायिकादिसमुच्चयः । तैरपि केषांचित्तत्त्वाङ्गीकारादिति भावः । नैषा पूर्ववत् शब्दप्रवृत्तिरेवेत्याह-*एषा चेति* । शब्दो—वाक्यम् । एकदेशः—प्रकृतिप्रत्ययादिः । रचना—आकृतिः । आ-

---

(१) फलितया वासनेति । पाठान्तरम् । (२) हस्तलिखितपुस्तके'तु' शब्दरहितः पाठः ।

(३) आदिना शब्दव्यञ्जनास्थलीयश्लेषसाधारणशब्दमहिमपरिग्रहः । इत्यधिकः पाठः पुस्तकान्तरे ।

(४) नियन्त्रितायामभिधायामवाच्यार्थविषयकधीजनकस्तादृशो व्यापारः शब्दव्यञ्जना । शब्दस्य पर्यायपरिवृत्त्यसहत्वाच्च तत्त्वम् । इतिपाठान्तरम् ।

(५) हेतुर्योऽर्थसम्बन्धिव्यापारः सोऽर्थव्यञ्जना । इति हस्तलिखितपुस्तकेऽत्र पाठः ।

दिना लीलादिहावाः । (१)अनतिप्रसङ्गादाह-*वक्त्रादीति* । अग्रिमा· दिना श्लेषादिः । वैशिष्ट्यज्ञानं चेति पाठः । चेति प्रतिभासमुच्चयः । य· त्त्वर्थस्य न व्यञ्जकत्वं किन्तु शब्दस्य; अस्यास्तन्मात्रवृत्तित्वादिति, तन्न ।

रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम् ।
रत्याकुला छादयते दक्षिणं नयनं हरेः ॥

इत्यादौ हरिपदेन दक्षिणनेत्रस्य सूर्यात्मकत्वं तत्सङ्कोचेन सूर्या· स्तेन पद्मसङ्कोचस्तेन पितामहस्य गमनं तेनाप्रतिबद्धं रतिविलसितमि· ति क्रमेण व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेरर्थ· स्यापि व्यञ्जकत्वावश्यकत्वात् ।

पश्यात्र नलिनीपत्रे बलाका दृश्यतेऽचला ।
रम्ये मारकते पात्रे शुक्तिकेव च निर्मला ॥

इत्यत्रापि वक्तृतात्पर्यविषयीभूतवाच्यार्थबाधाभावेऽपि तज्ज्ञाना· भावेऽपि निश्चलत्वेन शुक्त्युपमया चात्रस्तत्वं तेन तस्य निर्जनत्वं, तेन तदेवावयोः सङ्केतस्थानमित्यादिक्रमेण तत्तदर्थव्यङ्ग्यप्रतीतेर्मुख्यार्थबा· धज्ञानसत्त्वे तदप्रतीतेश्च । अत एवाद्यं विशेषणं पदस्य च तत्तत्स्वा· र्थबोधने उपरतत्वात् पुनःपुनरनुसन्धाने गौरवं (२)तदननुभवात् । "गतोऽस्तमर्कः" इत्यादौ शिष्येण सन्ध्यावन्दनादेः कर्तव्यत्वाशयेन गुरुं प्रति प्रयुक्ताद्वक्तृतात्पर्याभावेऽपि प्रतिवेश्यादीनामभिसरणोप· क्रमादिबोधस्य वाच्यार्थधीपूर्वकस्य वाच्यार्थबाधज्ञानेऽजायमानस्य लक्षणयोपपादयितुमशक्यत्वाच्च ।

यत्तु "गतोऽस्तमर्कः" इत्यादौ न व्यञ्जना, एकसम्बन्धिदर्शनादप· रसम्बन्धिस्मरणवदुपपत्तेरिति, तन्न । 'गतोऽस्तमर्कः' इत्यादिश्रवणो· त्तरं सन्ध्यावन्दनकर्तव्यत्वं मया स्मृतमित्यनुव्यवसायाभावात् तत्ता· नुल्लेखात् । इदं पदमेतदर्थस्य न वाचकं नापि लक्षकं नापि स्मारकमपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेणाप्यतिरिक्ततात्सिद्धेः । असम्बद्धस्यापि व्यङ्ग्यत्वाच्च । एतेन तदर्थानां वक्त्रादिवैशिष्ट्यज्ञा· नप्रतिभासहकृतमनसैव विशिष्टधीसम्भवात् चमत्कारं प्रति शाब्दस्येव मानसस्यापि चेष्टानुरोधेन हेतुतायाः क्लृप्तत्वाच्च व्यञ्जनासत्त्वे न मानम् । प्रतिभा च तत्पदार्थविषयसंस्कारोद्बोधको बुद्धिविशेष एव, इत्यपास्तम् । व्यङ्ग्योऽर्थोऽनुमेय इति त्वयुक्तमेव । विरुद्धानैकान्ति·

---

(१) ननूभयत्र । इत्यप्यधिकः पाठो दृश्यते,
(२) गौरवात् । इति हस्तलिखितपुस्तके पाठः ।

केभ्यो व्याप्तिपक्षधर्मतादिनिर्णयाभावेऽपि व्यङ्ग्यार्थप्रतीतेः। किञ्च सिद्धिसत्त्वेऽपि व्यङ्ग्यार्थबोधदर्शनेन तत्प्रतिबध्यतावच्छेदककोटौ तद्भेदनिवेशेऽतिगौरवापत्त्या तज्जन्यबोधस्यातिरिक्तत्वे एव लाघवात्। अन्यथा शब्दप्रमाण्योच्छेदापत्तेरिति दिक्। अनया कटाक्षेणाभिलाषो व्यञ्जित इति सर्वजनप्रसिद्धेश्चेस्याश्चेष्टावृत्तित्वमप्यावश्यकम्। बोधकत्वस्य चेष्टायां सत्त्वेऽपि तन्निष्ठबोधकत्वं न शक्तिश्चेष्टा शक्तिरिति(१) प्रामाणिकव्यवहाराभावात्। किन्तु तज्जन्यबोधे तज्ज्ञानस्य कारणत्वं बोध्यम्।

यत्तु तत्तद्वाचकशब्दज्ञानद्वारा चेष्टया बोध इति। तन्न। चेष्टया जडमूकादिव्यवहारानापत्तेः। तस्यापि जन्मान्तरीयशब्दस्मरणमित्यन्ये इति दिक्। तदाह—*इत्यन्यत्रेति*। गुरुमञ्जूषादावित्यर्थः।

इति व्यञ्जनानिरूपणम्॥



(१) "चेष्टाशक्तेति" इति पाठान्तरम्।

नन्तु कोऽसौ शक्त्याश्रयः शब्दः । न च वर्णाः प्रत्येकम्, तथा सति द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेः । नापि संहताः । उच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात् । उत्पत्तेरभिव्यक्तेर्वा क्षणस्थायित्वात् । क्षणशब्देन तदाधारः कालः । मुख्यक्षणस्य प्रत्यक्षायोग्यत्वेन तदवच्छि-

( कुञ्जिकाटीका )

*ननु कोऽसाविति* । अखण्डपक्षे आभ्यन्तरः स्फोटो जातिव्यक्ती बाह्यस्फोटाविति त्रीणि वाक्यलक्षणानि । सखण्डपक्षे तु नियतसाधन आख्यातशब्दपदक्रमो वा पदसङ्घातो वाऽऽद्यमेव पदं वा सर्वाणि पदानि वेति पञ्च वाक्यलक्षणानि । तत्रैषु अष्टसु पक्षेषु कः पक्षो युक्त इति विचारः । तथा शक्त्याश्रयाः । शब्दानां नित्यत्वमभिप्रेत्याह—*अभिव्यक्तेरिति* । *क्षणशब्देनेति* । क्षणो नाम शब्दतन्मात्रद्वारा प्रकृतेः परिणामविशेषः क्षणधारारूपकालस्य परमापकर्षावधिः । स च न प्रत्यक्षः, अतिसूक्ष्मत्वात् । किन्तु तत्समूहरूपः काल एव । यथा परमाणौ स्वीय ऊर्ध्वनभोदेशत्यागोपलक्षितः कालः क्षणः । ननु उ-

( कलाटीका )

अथ वाचकशब्दं निरूपयति—*नन्वित्यादिना* । वर्णस्फोटवादिमतं द्वेधा प्राचोक्तं खण्डयति क्रमेण--*न च वर्णा* इत्यादिना । तथा पर्याप्तिसम्बन्धेन शक्त्याश्रयः(१) । *वैयर्थ्यापत्तेरिति* । किञ्च धनं वनमित्यादौ नलोपाद्यापत्तेः । किञ्च प्रत्येकं वर्णादर्थबोधापत्तेः । न च प्रत्येकं वर्णैरर्थस्मरणमात्रं जन्यते, चरमेण पुनः स्पष्टं जन्यते, प्रत्यक्षे इव स्मरणेऽपि वैजात्यस्वीकारे बाधकाभावादिति वाच्यम् । प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वाद् गुरुत्वाच्चेत्यपि बोध्यम् । *संहता इति* । न च प्रत्येकावृत्तेः कथं समुदितवृत्तित्वं द्वित्वादिवदुपपत्तेरिति भावः । *उच्चरितेति* । प्रत्येकं वर्णानामित्यादिः । ननु उच्चरितप्रध्वंसित्वमेव कुतः? अतो नित्यत्वपक्षे आह—*अभिव्यक्तेरिति* । जन्यत्वपक्षे आह—*उत्पत्तेरिति* । नन्वेवं वर्णप्रत्यक्षं न स्यात्क्षणस्याप्रत्यक्षत्वादत आह—*क्षणेति* । तच्छब्देनान्यतरपरामर्शः । क्षणसमूहरूपः प्रत्यक्षयोग्य इत्यर्थः । अयमेवोच्चारणाधिकरणकालः । तदाह—*मुख्येति* । इदमापरामर्शायोग्यत्वादिति भावः । नन्वेवमपि प्रत्यक्षत्वं न, उच्चारणाधिक-

(१) शक्त्याश्रयत्वाच्छब्दः । इति पाठान्तरम् ।

त्त्वर्णस्याप्यप्रत्यक्षत्वापत्तेः। उच्चरितप्रध्वंसित्वं चोच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वम् । एवञ्चायं पूर्वोऽयं पर इति प्रत्यक्षविषयेदंशब्दघटिताभिलापाभिलप्यमानपौर्वापर्यज्ञानस्य "इको यणचि" (अष्टा० सू० ६-१-७७) इत्याद्युपयोगिनोऽसम्भवः। नष्टस्य प्रत्यक्षविषयेदमा परामर्शायोगात्। पदप्रत्यक्षस्याप्येवं क्रमावगाहिन एव "परः सन्निकर्षः" (अष्टा० सू० १-४-१०९) इति

( कुञ्जिकाटीका )

च्चारणप्रध्वंसयोर्यौगपद्यमयुक्तमत आह—*उच्चरितप्रध्वंसित्वं चेति*। *प्रत्यक्षविषयेति*। प्रत्यक्षविषयो य इदंशब्दस्तद्विषयो योऽयं पूर्व इत्यादिरभिलापस्तद्विषयस्य पौर्वापर्यस्य ज्ञानं न सम्भवतीत्यर्थः। *पदप्रत्यक्षस्यापीति* । भाष्यकृदनुभवसिद्धस्य क्रमावगाहिनः पदप्रत्यक्षस्योपपत्तिरित्यन्वयः।

( कलाटीका )

रणकालिकध्वंसप्रतियोगित्वरूपतत्त्वाङ्गीकारादत आह—*उच्चरितेति*। नन्वेतावतापि किमनिष्टमत आह—*एवञ्चेति* । तेन यौगपद्यासम्भवे चेत्यर्थः। तत्रादौ शास्त्रीयदोषमाह—*अयं पूर्व इति*। अभिलापान्वयीदम्।

ननु कस्याभावप्रयुक्तदभावोऽत आह—*नष्टस्येति* । तथा च प्रक्रियोच्छेदापत्तिरिति भावः। यदि कालिकं पौर्वापर्यं तदाऽसम्भवः। पूर्वापरयोर्युगपत्स्थित्यभावात् । अत एव न दैशिकमपि । आद्यमपि (१)युगपदवस्थितेष्वेव गृहीतुं शक्यं न तु नष्टविद्यमानयोः। अयं ज्येष्ठोऽयं मध्यमोऽयं कनिष्ठ इति व्यवहारवदयं पूर्वोऽयं पर इति व्यवहारस्यापि नष्टविद्यमानयोरसम्भवः। तयोः सम्बन्धस्य निरूपयितुमशक्यत्वात्। गकारः पूर्वमुत्पन्नस्ततोऽकारस्ततोऽन्य इत्येवं कालिकपौर्वापर्यग्रहः सम्भवन्नपि अनूपरकाकारस्य पाणिन्यादिव्यवहारानुपपत्तेर्न तदुपयोगीति तात्पर्यम्। लौकिकं दोषमाह—*पदेति*। एवेन तस्यातत्त्वव्यवच्छेदः। *पर इति*। "एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्चारयति गौरिति यावद्गकारे वाग्वर्तते नौकारे न विसर्जनीये च, यावदौकारे न गकारे न विसर्जनीये, यावद्विसर्जनीये न गकारे नौकारे" इति

(१) विद्यमानेष्वेव इति युगपदवस्थितेष्वेव इत्यस्य स्थाने पाठो हस्तलिखिते पुस्तके।

सूत्रोक्तरीत्या भाष्यकृदनुभवसिद्धस्यानुपपत्तिः । न च पूर्ववर्णस्थितिकाले द्वितीयवर्णोत्पत्तिः । पूर्ववर्णनाशोत्तरं यत्नान्तरेण वर्णान्तरोत्पत्तेः । "यावद्गकारे वाग् वर्तते न तावदौकारे इति येनैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन्वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रवर्तते" इति च तत्रैव सूत्रे भाष्ये उक्तत्वात् । न

---

( कुञ्जिकाटीका )

*यावदिति* । एकैकवर्णवर्ति वागिन्द्रियमेकमेव वर्णमुच्चारयति न द्वौ वर्णौ, उच्चरितश्च वर्णस्तदानीमेव नष्ट इति पौर्वापर्यसंहितयोरसम्भव इत्यर्थः । *वागिति* । वागिन्द्रियमित्यर्थः । *तेनैव* । यत्नेन विच्छिन्ने नष्टे उपसंहृत्य तं यत्नं त्यक्त्वा । पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभव एव तावद्वर्णगोचरां स्मृतिं जनयतीति तार्कि·

( कलाटीका )

तत्र भाष्यम् । वाक्शब्देन वागिन्द्रियम् । "यथा परः प्रयुज्यते न वर्णो वर्णस्य सहायः" इति च भाष्यम् । पूर्ववर्णध्वंसानन्तरं यद्यप्यपरः प्रयुज्यते तथापि स पौर्वापर्यादिव्यवहारे वर्णस्य पूर्वनष्टस्य न सहायो, नष्टविद्यमानयोः सम्बन्धाभावान्न तद्व्यवहारप्रयोजक इत्यर्थः । एवञ्च तज्ज्ञानाभावेन ततो बोधोच्छेदापत्तिः । एवञ्चोपलम्भो न युगपत्, नापि वास्तवी सत्तेति द्वितीयपक्षे उक्तदोषद्वयमिति भावः ।

उभयमुद्धरति—*न चेति* । पूर्ववर्णजनको यस्तेनैव द्वितीयादिवर्णोत्पत्तिरित्यर्थः । खण्डयति—*पूर्वेति* । एकेन यत्नेन वर्णे उच्चारिते तस्मिन्नष्टे तज्जनकयत्ने च नष्टे यत्नान्तरोत्पत्त्यनन्तरं द्वितीयवर्णोत्पत्तेरित्यर्थः । अत्र मानमाह—*यावदिति* । *विच्छिन्ने–नष्टे । *तं यत्नमिति* । पूर्वयत्नं त्यक्त्वेत्यर्थः। तं यत्नमुपसंहृत्य विच्छिन्ने तस्मिन् वर्णे इत्यन्वयः । *अन्यमिति* । यत्नान्तरमित्यर्थः । *तत्रैव* । परःसन्निकर्षत्रैव ।

परमतं खण्डयति—*न चेति* । यत्तु प्रत्येकवर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णप्रत्यक्षसामग्र्या स्मृतिप्रत्यक्षविषयाः सञ्जातसद्भावा वाचकाः । एवञ्च सदसदनेकविषया पदप्रतीतिः स्मृतिप्रत्यक्षात्मिकेति, तत्र क्रमविपरीतक्रमानुभूतानामविशेषेणार्थबोधकत्वापत्तेः । क्रमस्य सँस्काराविषयत्वेन स्मृत्यविषयत्वात् । न चानुभवक्रमोपाहितानामेव तेषां स्मृत्याऽवगाहनात् क्रम·

चोत्तरवर्णप्रत्यक्षकाले संस्कारवशादव्यवहितोत्तरत्व-सम्बन्धेन पूर्ववर्णवत्त्वं तदुत्तरवर्णे गृह्यते, एवं तदुत्तरव-र्णप्रत्यक्षकाले संस्कारोपस्थितविशिष्टतत्तद्वर्णत्वं तत्तदु-त्तरवर्णे गृह्यत इति तज्ज्ञानं सुलभम्। सरो रस इत्यादौ विशेषश्च। यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव भवन्तीति (१)न पदप्रत्यक्षानुपपत्तिरिति वाच्यम्। आद्येऽयं पूर्वोऽयं पर इत्यभिलापासम्भवात्। नष्टविद्यमानयोः सम्बन्धि-नोरव्यवहितोत्तरत्वस्य सम्बन्धताया वक्तुमशक्यत्वाच्च।

( कुञ्जिकाटीका )

कोऽर्थं शङ्कते—*न चेति*। *उपस्थितेति*। उपस्थितो विशिष्टो यो वर्णस्तद्वत्त्वं तृतीयवर्णे गृह्यत इत्यर्थः। *शब्दजशब्देति*। यथा वीचिरुत्पन्ना तरङ्गान्तरमुत्पादयतीति वीचितरङ्गन्यायेनैकैकशब्दाच्छ-ब्दान्तरोत्पत्तिः, ततः श्रोत्रमागतो गृह्यत इति तार्किकाः। अव्यवहितो-त्तरत्वसम्बन्धेनेत्यादिकां प्रथमामाशङ्कामुद्धरति—*अभिलापासम्भवा-

( कलाटीका )

व्युत्क्रमयोरविशेष इति देवताधिकरणे मिश्रोक्तरीत्या निर्वाह इति वाच्यम्। अनुभवक्रमस्य स्मृतिक्रमेऽनियामकत्वात्। दृश्यते च प्रपू-र्वेद्युरनुभूतमस्मृत्वा पूर्वेद्युरनुभूतस्य स्मरणम्। किञ्च तत्तानुल्लेखान्न तत्र स्मरणत्वं युक्तं, तदेतदभिप्रेत्याह—*उत्तरेति*। *तज्ज्ञानम्—पौर्वा-पर्यज्ञानं पदज्ञानं च। *सर इति*। आनुपूर्वीलाभादिति भावः। आ-दिना नदी दीनेत्यादिपरिग्रहः।

अन्यत्रावश्यकयुक्तिं लाघवादभ्याप्याह—*यद्वेति*। *शब्दजेति*। भेर्यादिशब्दजशब्दरीत्येत्यर्थः। अत एवाह—*चरमेति*। *पदेति*। इदमुपलक्षणं, पौर्वापर्यज्ञानस्यापि। *अभिलापासम्भवादिति*। तस्य कालदेशान्यतरकृतत्वेनाद्ये एककालवृत्तित्वेन तदसम्भवादित्यर्थः। एवञ्च पौर्वापर्यज्ञानं नेति भावः। पदज्ञानमपि नेत्याह—*नष्टेति*। तस्य तद्घटितसन्निवेशापेक्षत्वादित्यर्थः। द्वितीये आद्यदोषोद्धारे

(१) सन्तीति पाठान्तरम्।

एवं पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र वृत्त्याश्रयत्वग्रहानुपपत्तेश्च । अविद्यमाने आश्रयत्वाङ्गीकारे 'नष्टो घटो जलवान्' इत्यादेरापत्तेः । अविद्यमानयोरपि जलघटयोराश्रयतानिरूपकत्वस्याश्रयत्वस्य च त्वद्रीत्या बाधाभावात् तज्ज्ञानस्य प्रमात्वापत्तेः । किञ्चैवं पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः। तदुक्तम्—

अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत् । इति ।

पदसमुदायात्मकवाक्यस्येव वर्णसमुदायरूपपदस्याप्यभावात् । उभयोरप्यर्थासम्बन्धादिति तदर्थः । किञ्चैकं पदमिति बुद्धेस्तदेवेदं कृष्णपदमिति बुद्धेश्चानु-

(कुञ्जिकाटीका)

दिति* । *पदवाक्ययोरभावेनेति* । वर्णानां समुदायस्यासम्भवादिति भावः । *तथा भवेदिति* । पदार्थोऽपि अशाब्दः स्यादित्यर्थः ।

यत्तूक्तं लीलावत्याम् एकं पदमिति बुद्धिरेकसुप्तिङन्तत्वावच्छेदेनेति, तन्न । सुप्तिङन्तयोरनुगतस्यैकस्य पदावच्छेदकस्य वक्तुमशक्य-

(कलाटीका)

ऽप्याद्यसाधारणं द्वितीये(१)दोषमाह—*एवमिति* । उक्तरीत्येत्यर्थः । स एव च बोधोपयोगीति प्रागुक्तम् । ननु तत्राप्याश्रयत्वमस्त्वत आह—*अविद्येति* । आदिग्राह्यमग्रेऽनुपदमेव स्फुटम् । ननु तत्र तदभावेऽपि शुक्तिरजतप्रतीतिवत्सा प्रतीतिर्दुर्वारैवात आह—*अविद्येति* । यथासंख्यमाह—*आश्रयेति* । त्वया तत्रेव तत्रापि तद्धर्माङ्गीकारादिति भावः । (२)नापीत्यत्र दोषान्तरमाह—किञ्चेति* । *एवम्* तेषां प्रत्येकं संहतानां वा तदाश्रयत्वेन तत्त्वाङ्गीकारे उक्तरीत्या तयोरुपादानसंभवे । *अभावेन*—फलाभावादतिरिक्ततदस्वीकारेण । *शब्देति* । लोकप्रसिद्धपदवाक्यात्मकशब्देत्यर्थः । *तदुक्तमिति* । हरिणेति शेषः । यद्यपि तुल्ययुक्त्या वाक्यस्य वाक्यार्थशक्तिसाधकोऽयं तथापि तत एव तात्पर्यार्थमाह—*पदेति* । *अर्थासम्बन्धादिति । तयोरशाब्दत्वा-

(१) अत्रत्यं द्वितीये इति पदं द्वितीये हस्तलिखितपुस्तके नास्ति ।

(२) अभ्युपेत्य उभयत्र दोषान्तरमाह—*किञ्चेति* । इति हस्तलिखितपुस्तके पाठः ।

पपत्तिः पक्षद्वयेऽपि। न चैकजातीयबुद्धिविषयत्वौपाधिकी एकबुद्धिविषयत्वौपाधिकी च सेति वाच्यम्। तज्जातीयमिदं पदमिति व्यवहारस्याप्यापत्तेः। तदेवेदं पदमिति नियमेन व्यवहाराच्च।

एतेन पूर्वनखादिनाशोत्तरं पुनरुत्पन्ने नखादौ 'तदेवेदं नखं' 'त एवेमे केशाः' इतिवत् सादृश्येन प्रत्यभिज्ञेत्यपास्तम्। अवयवैरेवैकैकबुद्धिविषयैरेकः पट इत्यादिबुद्ध्युपपत्ताववयविनोऽप्यतिरिक्तस्य तव सिद्ध्यनापत्तेश्च।

किञ्चैवमुच्चारणभेदाद्भिन्नेषु शक्तिग्रहासम्भवः, व्यक्तिवाद इवानन्त्यव्यभिचारात्। व्यभिचारश्च गृहीत-

(कुञ्जिकाटीका)

त्वात्। एकत्वबुद्धेरौपाधिकत्वे सर्वत्र तदुच्छेदापत्तेश्च। *पक्षद्वयेऽपीति*। संस्कारवशादिति पक्षे यदा अनन्ताः शब्दा इति पक्षे चेत्यर्थः। *न चैकेति*। घकारटकारयोर्भेदेऽपि घकारटकारबुद्ध्योरेकजातीयत्वादेकपदत्वव्यवहारः। एवं दिनभेदेनोच्चारितयोर्घटपदयोरेकबुद्धिविषयत्वात्तदेवेदमिति व्यवहार इत्यर्थः। *किञ्चैवमिति*। एकघटपदे-

(कलाटीका)

पत्तिरिति शेषः। उभयत्र दोषान्तरमाह—*किञ्चेति*। *पक्षेति*। तेषां प्रत्येकं संहतानां वा तत्त्वमिति पक्षद्वयेऽपीत्यर्थः(१)। प्रत्यासत्त्या व्युत्क्रमेणोभयत्रोपपत्तिमाह—*न चेति*। तथा चारोप इति भावः। आद्ये दोषमाह—*तज्जातीयमिति*। अपिना तस्यैव सङ्ग्रहः। इष्टापत्तावाह—*तदेवेदमिति*। *एतेन—उक्तदोषद्वयेन। आदिग्राह्यमेवाह—*त एवेमे इति*। दृष्टान्ते तूभयमिष्टमिति भावः। द्वितीये दोषमाह—*अवयवैरिति*। पक्षद्वयसाधारणमेवोभयत्र दोषान्तरमाह—*किञ्चैवमिति। उक्तोऽर्थः। *आनन्त्येति। समाहारद्वन्द्वः, मध्यमपदलोपि समासो वा।

ननु शब्दे एव शक्तिग्रहो नान्यत्र, यस्य शक्तिग्रहस्तत एव बोधश्चेति क्व व्यभिचारोऽत आह—*व्यभीति*। यस्य शक्तिग्रहस्तस्मान्न बोध

(१) अभिव्यक्त्युत्पत्तिपक्षद्वयेऽपीत्यर्थः।

शक्तिकस्यैव बोधकत्वमिति सर्वसिद्धे नियमे बोध्यः। आनुपूर्वी तु तत्तत्कालघटितत्वेनाव्यवहितोत्तरत्वाननुगमात् प्रत्युच्चारणं भिन्नेति तस्या अपि शक्ततावच्छेदकत्वे सैव दुरवस्था। तादृशाव्यवहितोत्तरत्वेनानुगमोऽपि तादृशत्वस्य दुर्ज्ञेयत्वादयुक्त एव। व्यवधानाभावे सति घज्ञानध्वंसविशिष्टज्ञानविषयटत्वमेवानुपूर्वी, तत्परिच्छेदश्च मनसैवेति पक्षेऽपि ज्ञानव्यक्तिभेदेनाऽऽनुपूर्व्यनन्तैव।

( कुञ्जिकाटीका )

शक्तिग्रहेऽप्यन्यघटपदे शक्तिग्रहाभावात्। ननु सकलघटपदे आनुपूर्वीसाम्यात् शक्तिग्रह इत्यत आह--*तत्कालेति*। तत्तत्कालघटितस्याव्यवहितोत्तरत्वस्यैकस्याभावादित्यर्थः। *सैव*—शब्दान्तरस्य बोधकत्वानापत्तिरूपैव। *आनुपूर्वी त्विति*। भिन्नैवेत्यत्रान्वयः। तत्तत्पदवृत्तयस्तत्तत्पदनिष्ठाः। *अनन्ता इति*। पदभेदात्॥

( कलाटीका )

इत्यादावेवेति यस्माद् बोधस्तस्य न स इति व्यभिचार इत्यर्थः। नन्वानुपूर्वीरूपशक्ततावच्छेदकैक्येन तेषामनुगमान्नोक्तदोषाविति तत्सम्भवोऽत आह—*आनुपूर्वीति*। भेदेऽननुगमो हेतुस्तत्र(१)तद्घटितत्वम्। स्वकालोत्तरकालिकत्वं हि सेति भावः। अपिर्व्युत्क्रमे। तस्याः शक्ततावच्छेदकत्वेऽपीत्यर्थः। *अनुगमोऽपीति*। आनुपूर्व्या इति भावः। (२)ननु तस्याः कालाघटितत्वेनायं दोषोऽत आह—*व्यवेति*। तत्र तद्व्यवहाराभावात्। एवं चाव्यावहितोत्तरत्वलाभः। वैशिष्ट्यं च ज्ञाने कालिकसामानाधिकरण्येन। एवेनोक्तव्यवच्छेदः। नन्वेवमप्युक्तरीत्या तज्ज्ञाने उक्तदोष एवात आह—*तदिति*। तादृशानुपूर्वीनिश्चय इत्यर्थः। चो व्युत्क्रमे, मनसैव चेत्यर्थः। एवेन श्रोत्रव्यवच्छेदः। शब्दतोऽसम्भवादाह—*मनसैवेति*। एवं मौनिश्लोके लिपिक्रमेण ज्ञानक्रमोऽनुमेयः। घचटेत्यादिवारणाय सत्यन्तम्। कदम्बगोलकन्यायेनोत्पन्नटकारान्तराविषयकश्रोत्रावारणविषयघज्ञानध्वंसविशिष्टटकारप्रत्यय इत्यर्थः। *ज्ञानेति*। ज्ञानरूपव्यक्तीत्यर्थः। *अनन्तैवेति*। तथा चोक्तदोष एव।

---

(१) "तदघटितत्वं" इति पाठान्तरं क्वचित्।

(२) ननु न सा कालघटिता, किन्त्वन्यादृशीति न भेदस्तस्या इति नायं दोषोऽत आह-*व्यवेति* इति हस्तलिखितपुस्तके पाठः।

न च चरमवर्णज्ञानव्यङ्ग्यास्तत्तत्पदवृत्तयोऽनन्ता जातयः शक्ततावच्छेदकत्वेन कारणतावच्छेदकत्वेन च कल्प्यन्त इति न दोष इति वाच्यम् । अनन्तजातिकल्पने गौरवात्, उक्तरीत्या वृत्त्याश्रयत्वासम्भवाच्च । पदानामसत्त्वेन तत्र जातेरप्यसम्भवाच्च इति चेत् ॥

अत्रोच्यते । प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रलयाल्लीनसर्वजगत्का माया चेतने

( कुञ्जिकाटीका )

स्फोटस्यैव वाचकत्वं दर्शयितुमाह—*अत्रोच्यते इति* । *प्रलये भौतिकादिप्रलये । महाप्रलयस्वीकारे तु सर्वकर्मणामेव नाशो भवति, ततश्च शेषकर्माभावे पुनः शरीरारम्भानापत्तेः । अत एव यदिह रमणीयचरणास्ततः शेषेणेत्यादि श्रूयते । *नियतेति* । नियतकालं परिपाको भोगो येषाम् । *लीनसर्वजगत्केति* । भुक्तभोग्यानां प्राणिनां

( कलाटीका )

नच घज्ञानत्वादिनाऽनुगमः, गुरुभूतानुपूर्व्याः शक्ततावच्छेदकत्वे पदज्ञाननिष्ठकारणतावच्छेदकत्वे च गौरवात्, यद्वेतिमतेऽप्यानन्त्याच्छक्तिग्रहो दुरुपपाद एवेति भावः । प्रकारान्तरेण तयोरभावमाह—*न चेति* *चरमेति* । तथा च पूर्वं तदनभिव्यक्तेर्न बोधः । सरो रस इत्यादौ विशेषश्चेति भावः । अत एवाह—*अनन्ता इति* । कल्पकमाह—*शक्तेति* । अत्राविश्वस्तं प्रत्याह—*कारणतेति* । बोधेत्यादिः । अन्यथानुपपत्त्याऽऽह—*कल्प्यन्त इति* । तथा च ताभिरनुगमस्तदाह—*न दोष इति । तद्दोषद्वयाभावात्तदसम्भवरूपदोषो नेत्यर्थः । नन्वन्यथानुपपत्त्या गौरवमिष्टमेवेति आह—*उक्तेति* । पदादेरसत्त्वेन यथा तत्र तदभावस्तथात्रापि तदुपपादनेऽपि तेषामसत्त्वे(१)तत्त्वाच्चेत्यर्थः । तथा च तदसम्भव एवेति भावः । तुल्ययुक्त्या दोषमाह—*पदानामिति* । जातेरिति जातावेकवचनम् ।

एवं पूर्वपक्षे वाचकस्वरूपं वक्तुमादौ तदुपयोगिनामरूपसृष्टिप्रक्रियां वक्तुमादौ परमतासाङ्गत्याय तदुपयोगिप्रलयस्थितिपूर्विकां सृष्टिप्रक्रियामाह—*प्रलय इत्यादिना* । प्रलये–खण्डप्रलये । नियतेति हेतुगर्भं विशेषणम् । सर्वत्वं प्राणिविशेषणम् । *उपेति* । तत्फलभोगेनेत्यर्थः ।

(१) असत्त्वेन तदभावाच्चेत्यर्थः । इति पाठान्तरम् ।

ईश्वरे लीयते। लयश्चायमपुनःप्रादुर्भावफलको नात्यन्तिको नाशः। उत्तरसर्गानुपपत्तेः। नापि सर्वथाऽ-

( कुञ्जिकाटीका )

मायायां लयः। तस्याश्चेश्वरे इत्यर्थः। एवञ्च कारणनाशात्कार्यनाश इति तार्किकोक्तमयुक्तम्। यथा च रज्जूरगादिवदपृथग्भूतानामात्मन्यध्यस्तानां वियदादीनां शुद्धे ब्रह्मणि लयो भवति। स च न मृदि घटस्येवानुपलब्धिरूपः, किन्तु रज्ज्वामहेरिव। तत्र बुद्धिवृत्तेरपि लीनत्वादेनं न कश्चिद्वेद। स च लयः कालविशेषावधिसापेक्षः। तत्र लीनं सर्वमुत्थानसंकल्पं विना सुप्तवत्तिष्ठति तस्यामवस्थायाम्। यथा जतु काष्ठसंयोगेषु(१)पृथङ्न दृश्यते, यथा वा जलसैन्धवरसौ एकलीभूतौ पृथक्त्वेन नानुभूयेते तथाऽत्र न तमृतेऽन्यत् ज्ञायते रज्ज्वामिव सर्पबाधे तदतिरिक्तवत्। अत एवाहङ्कारशून्यत्वान्न प्रमाता। साक्ष्यभावान्न द्रष्टा। साक्षिवृत्तेरपि लयान्न ज्ञाता। चरमान्तःकरणवृत्त्या ब्रह्मविद्याख्यया प्रपञ्चं विषयीकरोति। एवञ्च सर्वं जगदुपसंहृत्य शुद्धचिन्मात्ररूपेणावतिष्ठते। तदुक्तं हरिणा--

प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम्।
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः॥ इति॥

मूलप्रकृत्या ब्रह्मणा वा ये जगत एकत्वमभेदेन पश्यन्ति तेषां मते निरन्वयविध्वंसाभावान्महासामान्यरूपे तस्मिन्मूलकारणे लयमात्रं महाप्रलय इति शक्तिरूपेषु पदार्थेषु यथायथं शक्तियोगः, द्रव्यात्मना तदानीमपि जातीनां सत्त्वं द्रव्यान्तरस्याभावात्। *ईश्वरे इति*। यथा स्फटिके जपाकुसुमसन्निधानाद्रक्तत्वावभासस्तत्रैव स्फटिकांशप्रमोषे यद्गगनत्वावभासः, एवं शुद्धायां चिति मायोपाधिसान्निध्यादीश्वरत्वाध्यासः। सोऽयमात्मा आवरणविक्षेपशक्त्या अविद्याया आश्रयः। तत्राऽऽवरणांशेन शुद्धरूपतिरोधानं विक्षेपांशेन ईशादिस्थूलदेहान्तानां प्रतिभासः। तयोर्निवृत्तौ शुद्धचित्(२)स्वरूपेणावतिष्ठते। *लयश्चायमिति*

( कलाटीका )

*ईश्वरे-ब्रह्मणि। *लयश्चेति*। मायाया इति शेषः। आत्यन्तिक इत्यस्य व्याख्या पुनरिति(३)। तेषां प्राणिनामित्यर्थः। *उत्तरेति*। तस्य च "धाता यथापूर्वम्" इत्यादिश्रुत्या सिद्धत्वादिति भावः। मात्रपदेन व्या-

(१) हस्तलिखितपुस्तके नकाररहितः पाठः।

(२) चितिरूपेण इति पाठान्तरम्।

(३) तस्या वैयर्थ्यमाह—अपुनरिति*। इति पाठान्तरम् ख० पु०।

भानम्। प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः। किन्तु सुप्तेव तिष्ठति, कार्यप्रवृत्त्यभावात्। स्वप्रतिष्ठेश्वरप्रकाशस्यात्यन्तनिर्विकल्पकतया तद्बलाद्भासमानाऽप्यभानप्रायैव। ततोऽपरिपक्वप्राणिक-

( कुञ्चिकाटीका )

नात्यन्तिक इत्यत्रान्वयः। अत एव सहस्रयुगपर्यन्तं लयः। आत्यन्तिकलयस्तु मुक्तावेव। *प्रतिभासमात्रेति*। रज्जौ सर्पावभासवदद्वैतनये मिथ्याभूतस्य प्रपञ्चस्य अनादिमिथ्यावभासनिमित्तकल्पनयैव सत्त्वात्। मायाकल्पितत्वमपि हि व्यवहारदृष्ट्यैव, न वस्तुतः। प्रातीतिकतद्रूपेणैव व्यवहारस्योत्पन्नत्वात्। *तदभावस्येति*। आत्यन्तिकस्येति शेषः। *सुप्तेवेति*। कार्याजनकत्वात्सुप्ता इव तिष्ठतीत्यर्थः। प्रधानांशतमस्समुद्रेकेणान्यानवभासो हि स्वापः। तथा च कर्मविक्षेपसंस्कारसहितलक्षणाविद्यावशेषतासाम्येन स्वापसादृश्यं लयस्य। तत्र ह्यन्तःकरणादयोऽविद्यायां सूक्ष्मरूपेण शक्तिरूपेण वासनाभिः सहावतिष्ठन्ते। एवञ्च सूक्ष्मरूपेण स्थिता शक्तिः स्थूलरूपेण विवर्तते। एतेन शक्तिमिश्रिताद्ब्रह्मणः पुनः शक्तेः कथमुत्पाद इत्यपास्तम्।

*स्वप्रतिष्ठेति*। स्वरूपमात्रे प्रतिष्ठितस्येश्वरप्रकाशस्येत्यर्थः। प्रकाश्यप्रकाशकहीनस्येति यावत्। अनौपाधिकचैतन्यं हि तस्य स्वरूपम्। विषयविषयिणोर्भेदाभावाद्धर्मान्तरस्य चाभावादिति भावः। *अत्यन्तेति*। तार्किकप्रसिद्धनिर्विकल्पकं धर्मधर्मिविषयम्। ब्रह्मात्मकं तु ज्ञानं निर्विषयमेव। प्रातिपदिकार्थमात्ररूपेणावस्थितं निर्विकल्पकमविद्याकृतभेदनिवृत्तौ शुद्धरूपेणावस्थानात्। *अभानप्रायैवेति*। मायाया भाने तु चितेः सविकल्पकत्वापत्तौ निर्विकल्पकत्वं भज्येत।

( कलाटीका )

वहारिकत्वादिव्यवच्छेदः। *अनवेति*। सर्वथेत्यादिः। इष्टापत्तावुक्त एव दोषः। लयादेवाह—*सुप्तेवेति*। न तु सुप्ता तदसम्भवादिति भावः। (१) अत एवाह—*कार्येति*। अभानप्रायत्वेऽपि मध्यमणिन्यायेन हेतुरयम्। तदानीमपि तत्सत्त्वमाह—*स्वप्रतिष्ठेति*। न तु सूर्यादिप्रकाशवदिति भावः। अतएव सर्वथेतरनिरपेक्षत्वेनान्यनिर्विकल्पकं वैलक्षण्यमाह—*अत्यन्तेति*। अत एवाह— *तद्बलादिति*। प्राग्वदेवाह—*प्रायैवेति*। अथ तन्त्रप्रतिपादित-

(१) तत्रहेतुमाह—*कार्येति*। इति हस्तलिखितपुस्तके पाठान्तरम्।

र्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुरुषावाविर्भवतः । ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते । ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते । इदमेव शक्तितत्त्वम् ।

---

( कुञ्जिकाटीका )

*अपरिपक्वेति* । अभुक्तेत्यर्थः । संस्कारस्यानादित्वाच्च न पूर्वसर्गकर्मशेषविरोधः । नन्वीश्वरस्यानादित्वे "तदैक्षत बहु स्यां प्रजायेय" इति सृष्टिसमये आगन्तुकमीक्षणं कथमुपपद्यतामिति चेत् । सत्यम् । यथा विषयेन्द्रियसन्निकर्षाज्जीवोपाध्यन्तःकरणवृत्तिभेदा जायन्ते, एवं सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतायां मायायां वृत्तिभेदा "इदमिदानीं स्रष्टव्यम्' इत्याकारिका जायन्ते । *प्राप्तपरिपाकैः* । उपस्थितपरिपाकैः । प्राणिकर्मपरिपाकवशेन सिसृक्षावशात् "एकोऽहं बहु स्याम्" इति भगवतो बुद्धिर्भवति । *अबुद्धीति* । अविद्यापरस्येश्वरस्य स्वभावो लीलेति चोच्यते । नन्वसङ्गोदासीनस्य परमार्थतो निरतिशयस्य शक्तिशक्तिमतोरभेदेन शक्तेरप्यभावाच्च स्रष्टृत्वासम्भव इत्यत आह—*मायापुरुषाविति* । तदुक्तं सूतसंहितायाम्—

ब्रह्मरूपात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात् । इति ।

शक्तिमिश्रितात्—मायोपहितात् । मायाशबलादिति यावत् । अयं भावः—अद्वितीयस्य ब्रह्मणः क्रीडाया असम्भवादिच्छोत्पद्यते,

---

( कलाटीका )

सृष्टिप्रक्रियामाह—*तत इति* । ततः-प्रलयानन्तरम् । *प्राणीति* । प्राण्यन्तरेत्यर्थः । *स्वफलेति* । स्वस्वकर्मफलेत्यर्थः । एतेन वैषम्यादिनिरासः । तत्र स्वस्य फलाभिसन्धेरभावादाह—*अबुद्धीति* । तयोः प्रकाशरूपा सृष्टिरित्यर्थः । अनेन कर्मणां मायायाश्चानादित्वमुक्तम् । *ततः*—उभयप्रादुर्भावानन्तरम् । *ततः*—मायावृत्त्युत्पत्त्यनन्तरम् । मायावृत्तित एवेति भावः । *त्रिगुणम्*—सत्त्वरजस्तमोगुणात्मकम् । अस्यावश्यकतामाह—*इदमेवेति*(१) । ईश्वरस्येति

---

( १ ) अत्रान्यसम्मतिमाह—*इदमेवेति* । तदुक्तं शैवागमसारे भोजराजेन—

"पुंसो जगतः कृतये मायातस्तत्त्वपञ्चकं भवति ।

कालो नियतिश्च तथा कला विद्या च रागश्च ॥ इति ।

तत्त्वपञ्चकं—शिवशक्तिसदाशिवेश्वरविद्यात्मकम् । एतानि मायासहितानि शुद्धान्येकादश ॥

तस्य बिन्दोरचिदंशो बीजम्, चिदाचिन्मिश्रोंऽशो नादः, चिदंशो बिन्दुरिति। अचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्योच्यते॥

अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव रवपरादिशब्दैर्व्यवह्रियते।

बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत्।

( कुञ्जिकाटीका )

सैव माया। तदुक्तं काशीखण्डे—

यदेकलो न शक्नोषि रन्तुं स्वैरचर प्रभो।
तदिच्छा तव योत्पन्ना सैव शक्तिरभूत्तव॥
त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः। इति।

कार्यरूपबिन्दोस्त्रैविध्यमाह—*बीजमिति*। शक्तिरित्यर्थः। *चिदचिन्मिश्रः—तत्सम्बद्धः। *चिदंशः—ब्रह्मरूपः।

*रवपरादीति*। रवशब्देन पराशब्देन चोच्यत इत्यर्थः। तस्मा-

( कलाटीका )

भावः। (१)त्रिगुणत्वं सफलयति—*तस्येति*। व्युत्क्रमेणेति भावः। अचिच्छब्देनात्र न माया, तस्या मूलभूतत्वेन एतदनंशत्वादाह—*अचिदिति*। तत्स्वरूपमाह—*शब्देति*।

अत एवाह—*अस्मादिति*। अव्यक्तात्त्रिगुणादित्यर्थः। तत्र रजसः प्रवर्तकत्वादिति भावः। आदिना पदादि। शब्दार्थयोः सामान्यतो गुणाभावादाह—*ज्ञानेति*। मात्रपदेनांशान्तरव्यवच्छेदः। सृष्ट्युपयोगित्वं विशदयति—*एतदिति*। तथा च श्रुतिः—"वागेव विश्वा भुवनानि जज्ञे" इति। आदिना शब्दब्रह्मादिपरिग्रहः। आचार्योक्तिमाह—*बिन्दोरिति*। उक्तं हि प्रपञ्चसारे—

प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम।

इत्युपक्रम्य प्रकृतिमुपवर्ण्य कालभेदमुक्त्वा,

प्रकृतेश्च कचित्कालो विकृतिं प्रतिपादयेत्।

---

(१) त्रिगुणत्वं सफलयवत्रांतरभेदं तत्तत्संज्ञं कथयति—*तस्येति*। इति पाठान्तरं द्वितीयपुस्तके।

स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥

इत्युक्तेः। एतत्सर्वगतमपि प्राणिनां मूलाधारे सं-

( कुञ्जिकाटीका )

त्पराद्बिन्दोरव्यक्तो रवोऽभूदित्यर्थः। *मूलाधार इति*। षण्णवत्यङ्गुलो देहायामः। तत्राष्टचत्वारिंशन्मितमधस्तादुपरि च परित्यज्य मध्यं मूलाधारः। तदाहुः—

पाय्वन्ताद्(१)द्व्यङ्गुलादूर्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते ॥ इति ॥
नवाङ्गुलोर्ध्वतस्तस्मादस्ति कन्दोऽण्डसन्निभः।
चतुरङ्गुलविस्तारस्तन्मध्यं नाभिरुच्यते ॥ इति ॥

कुण्डलिनी(२) मूलप्रकृत्यात्मिका महदादिभिर्वेष्टिता सर्पवत्तिष्ठति। मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोतीति पातञ्जले स्पष्टम्। सङ्गीतरत्नाकरेऽपि—

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम्।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥
आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद्व्यङ्गुलादधः।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभमिति ॥

पवनस्योत्पत्तिश्च मूलाधारे भवति। तदुक्तम्—

देहेऽपि मूलाधारेऽस्मिन्समुद्याति समीरणः ॥ इति।

अत एव तस्य मूलाधारे व्यञ्जकत्वम्। *सर्वगतमपि*—सर्वत्र

( कलाटीका )

सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः सन्निधेस्तदा ॥
विचिकीर्षुर्घनीभूता क्वचिद्(३)भ्येति बिन्दुताम्।
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ॥
स्थूलसूक्ष्मतरत्वेन तस्य द्वैविध्यमिष्यते।
स बिन्दुर्नादबीजत्वभेदेन च निगद्यते ॥

इत्युक्तोक्तं तैर्बिन्दोरिति। उभयत्र रव इति पाठः। एवमग्रेऽपि भिद्येति हेतुगर्भं विशेषणम्। अंशत्रययुक्तादित्यर्थः। वर्णादिविशेषरहितत्वादाह—*अव्यक्तेति*। तदेव स्पष्टयति—*एतदिति*। अत एवाह—*सर्वेति*। एतेनैतदाद्यवस्थात्रयस्यैव वैखरीभिन्नस्य सर्व-

(१) "पाय्वन्तादप्यङ्गुलात्" इति पाठो हस्तलिखितपुस्तकद्वयेऽपि दृश्यते।

(२) "कुण्डलीमूल" इति पाठो दृश्यते। (३) भ्योर्वीति पाठान्तरम्।

स्कृतपवनचलनेनाभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योगे एव मूलाधारस्थपवनसंस्कारः तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया(१) निष्पन्दं परा वागित्युच्यते। तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति॥

(कुञ्चिकाटीका)

व्याप्तमपि। *पवनसंस्कार इति*। इच्छया जातेन प्रयत्नेन मूलाधारस्थः पवनो युज्यत इत्ययमेव संस्कार इत्यर्थः। *शब्दब्रह्मेति*। अयम्भावः—यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणवृत्तिभेदा जायन्ते तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमायायां वृत्तिभेदा जायन्ते इति। एतेन पूर्वोक्तप्रक्रियायां ब्रह्मणो निमित्तकारणत्वावगमात् "एतस्मादात्मन" इति श्रुतौ "जनिकर्तुः" इत्यपादानलक्षणपञ्चम्यनापत्तिरित्यपास्तम्। "स ऐक्षत, एकोऽहं बहु स्याम्" इति श्रुतौ ईक्षितृत्वश्रवणेन निमित्तत्वाद्बहुवचनश्रवणेन चोपादानत्वस्यापि स्वीकारात्। तथा च हेताविति निमित्तपञ्चम्यपि तन्त्रेण बोध्या। एवञ्च शुद्धब्रह्मणो निर्विकारत्वमेव। ऋग्वेदेऽऽपि "वागेव विश्वा भुवना जज्ञे वाचक इत्सर्वममृतं यच्च मर्त्यम्" इति। "छन्दोभ्य एव प्रथममेतद्विश्वं विवर्तते" इति च। *स्वप्रतिष्ठतयेति*। आधारान्तरानिराकरणायैतत्। *निष्पन्दम्—शून्यम्(२)। पश्यन्त्यां स्पन्दसामान्यमेवास्ति स्पन्दविशेषस्तु मध्यमायाम्। *अनादीति*। आ-

(कलाटीका)

प्राणिषु सार्वदिकस्येश्वरशक्तिरूपत्वेन व्यापकत्वे ऽपि तत्तत्स्थाने योगादेरभिव्यक्तेस्तत्तत्स्थानस्थेत्युच्यते इति सूचितम्। *मूलेति*। कुण्डलिन्यामित्यर्थः। जातेन तत्रैव तदिति। तादृशपवनचलनेन तत्रैवाभिव्यक्तमित्यर्थः। परत्वोपपत्तये हेतुगर्भं विशेषणमाह—*स्वप्रेति*। *अक्षरम्—व्यापकम्। विवर्तत इत्यनेन पश्यन्त्यादयोऽप्यस्या विवर्त्ता एवेति सूचितम्। *अर्थभावेन*—अर्थस्वरूपेण। ननु तस्य पश्यन्त्यादिविवर्तसम्भवेऽपि तेन रूपेण कथं विवर्तो विरुद्धत्वादत आह—प्रक्रियेति*। यतो यस्माज्जगत उत्पत्तिरित्यर्थः। शब्दा-

(१) "निस्स्यन्दम्" इत्यपि पाठः।

(२) निस्स्यन्दम्—स्यन्दशून्यम्। इति हस्तलिखितपुस्तकद्वयेऽपि पाठः।

( कुञ्जिकाटीका )

दिनिधनरहितं शब्दोपग्राह्यतयां शब्दतत्त्वं स्थितिप्रवृत्तिप्रविभागादिशब्देन उच्यते । तच्चाक्षरनिमित्तत्वादक्षरं प्रत्यक्चैतन्ये निवेशितस्य परबोधार्थमभिव्यक्तेः अर्थभावेन विवर्तते तत्त्वादप्रच्युतमेकं भेदानुकारेणासत्यानेकरूपतां प्राप्नोति । अभिधाशक्तिप्रवृत्तिमात्रं शब्दात्मकं ब्रह्मैव तत्तत्पदार्थरूपेण विवर्तते। यतः शब्दरूपाज्जगतो विकाराः क्रियन्ते इति। *यत इति*। नात्रारम्भवादः परिणामवादो वा विवक्षितः किन्तु विवर्तवादः । यथा रज्जुः स्वयमविकृतैव सती मायया सर्पाकारेण विवर्तते। कारणस्वरूपाविरोधे च कार्यप्रतिभासः । अतो ब्रह्मणो निर्विकारत्वान्न नित्यत्वविरोधः।

( कलाटीका )

र्थोभयसंस्काररूपाविद्यामिश्रितत्वेनाविरोधादिति भावः । शक्तिशक्तिमतोरभेदादियं चेतनैव । अत एव शारदादावित एव सर्वसृष्टिः स्पष्टमेवोक्ता, अस्याश्चेतनत्वं च । एवञ्चैतद्विवर्तभूतं पश्यन्त्याद्यवस्थात्रयमपि चेतनमिति बोध्यम्। इत्थं हि तत्रोक्तम्—

सच्चिदानन्दविभवात्सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादात् बिन्दुसमुद्भवः ॥
परशक्तिमयः साक्षात्त्रिधाऽसौ भिद्यते पुनः ।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ॥
बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः ।
समवायः समाख्यातः सर्वागमविशारदैः ॥
रौद्री बिन्दोस्ततो नादात् ज्येष्ठा बीजादजायत ।
वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः ॥
सञ्ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः ।
भिद्यमानात्परात् बिन्दोरव्यक्तात्मा ततोऽभवत् ॥
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः । इति ।

समवायः सम्बन्धः क्षोभ्यक्षोभकरूपः सृष्टिहेतुः । भिद्यमानादिति । पराद्बिन्दोरित्यनेन(१) शक्त्यवस्थारूपो यः प्रथमो बिन्दुस्तस्मादव्यक्तात्मा वर्णादिविशेषरहितोऽखण्डो नादमात्रं रव उत्पन्नः । तत्स्वरूपमेवाह—शब्देति । तदुक्तमाचार्यैः—

स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते । इति ।

उक्तं च "क्रियांशात्परम्" इति ईश्वरप्रत्यभिज्ञायाम् ।

(१) "शक्त्यवस्थारूपः" इति पाठान्तरम् ।

तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं मनोविषयः पश्यन्तीत्युच्यते। एतद् द्वयं सूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते(१)।

ततो हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्ततत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणायो-

( कुञ्जिकाटीका )

*तदेव*—शब्दब्रह्मैव। सूतसंहितायामपि—

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन।
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः॥ इति।

*निर्विकल्पकेति*। तत्त्वं च चिन्मात्रविषयकत्वम्।

समाधिस्तु समाधानं जीवात्मपरमात्मनोः।
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः॥ इति।

*योगिनामिति*। युक्त्या न। *बुद्ध्या*। निश्चयात्मिकया। *हिरण्यगर्भदेवत्या*। तद्रूपप्रणवरूपत्वेन वोपस्थिता दर्शिता। निराधारस्य

( कलाटीका )

यत इच्छति तज्ज्ञातुं कर्तुं वा स्वेच्छया क्रिया।
अनन्तरं हि तत्कार्यज्ञानदर्शनशक्तिना॥
ज्ञानशक्तिस्तदर्थं हि योऽसौ स्थूलः समुच्चयः।
सा क्रियाशक्तिरुदितो ततः सर्वं जगत्परम्॥
इति, पदार्थादर्शे च।

*तदेव*—पराख्यशब्दब्रह्मैव। *वायुनेति*। नाभिदेशे इति शेषः। मनोविषय इति पाठः। तस्याजहल्लिङ्गत्वात्। एवमग्रे ऽपि। *पश्यन्तीति*। सूक्ष्मरूपेणावस्थितस्येषत्स्थूलरूपप्रापणरूपविमर्शोन्मुखी बहिर्मुखस्य सदवस्थासामान्यज्ञानात्मिका पश्यदवस्थेश्वरशक्तिरूपत्वात्पश्यन्तीत्यर्थः। उपाधेः प्रत्याख्यानात्सूक्ष्मतमेऽपि सूक्ष्मतरत्वं नानुपपन्नम्। अत एव वक्ष्यति—*सूक्ष्मतमेत्यादि*। यथाक्रममाह—*निर्वीति*। *अभिव्यक्तेति*। पश्यन्त्येवेत्यर्थः। *बुद्ध्या*—अन्तःकरणेन। *परेति*। एतदाश-

(१) "मनोविषयम्" इति, "ज्ञानविषयम्" इति च नपुंसकलिङ्गनिर्देशः क्वचित् पुस्तकान्तरे दृश्यते।

रयत्वेन सूक्ष्मा मध्यमा वागित्युच्यते । स्वयं तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन उपांशुशब्दप्रयोगे च श्रूयमाणा सेत्याहुः । एतदवस्थात्रयमपि सूक्ष्मतमसूक्ष्मतरसूक्ष्मप्रणवरूपम् ।

सैव चास्यपर्यन्तं गच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या वैखरी

---

( कुञ्जिकाटीका )

चोपासनासम्भवादाधारोऽप्युक्तचेतनाधिष्ठानमन्तरेणाचेतनानां प्रका-

---

( कलाटीका )

येनैवं शब्दतत्त्वविद्भिः शब्दस्यावस्थाचतुष्टयमाम्नातम् ।

वैखरी शब्दनिष्पत्तिर्मध्यमाऽश्रुतिगोचरा ।
उद्यतार्था च पश्यन्ती सूक्ष्मा वागनपायिनी ॥ इति ।

अश्रुतिगोचरेति च्छेदः । सा श्रुतिगोचरा न, किं त्वन्तःकरणग्राह्या, वैखर्येव श्रुतिग्राह्येत्यर्थः । *मध्यमेति* । परस्पराध्यस्ताभेदेषत्स्थूलज्ञानज्ञेयनादात्मकजगद्रूपा तस्य तथैव पानकरसन्यायेन विमर्शिनी मध्यमा बुद्धिर्यस्या इति व्युत्पत्त्या मध्यमेत्यर्थः । तत्फलमाह—*स्वयमिति* । तुर्वैलक्षण्ये । निमित्तान्तरमाह—*सूक्ष्मेति* । *आहुः* । तत्त्वविदः । एतासां क्रमेण स्वरूपाण्याह—*एतदिति* ।

*सैव च* । मध्यमैव च । *परावृत्येति* । मुखदेशं प्राप्येति शेषः । अपिना स्वश्रोत्रम् । अपञ्चीकृतभूतकार्यसमष्टिः सूक्ष्मशरीरोपहितो हिरण्यगर्भः । पञ्चीकृतभूतकार्यसमष्टिः स्थूलशरीरोपहितो विराट् । एतदुभयभिन्न ईश्वरः । अधिदेवतमेतानि त्रीणि रूपाणि । *वैखरीति* । ज्ञानज्ञेयबोधकस्पर्शिनी । तेनैकप्रयत्नेन वक्त्रे स्वसहायेन प्राणाख्यवाय्वभिहतताल्वादिस्थानकरणजनितैर्वाय्वादिपरिणामैर्वर्णात्मकनादविशेषैरस्मदादिश्रोत्रग्राह्यैः कृतसंस्कारान्तःकरणवृत्त्या क्रमवन्नादमयीव परस्परतादात्म्याध्यासवत् ज्ञानज्ञेयनादरूपेण गृह्यमाणा विशेषेण कठिनत्वात् वैखरीत्यर्थः । तदभिव्यञ्जकवर्णात्मकनादा अपि वैखरीत्युच्यन्ते । तदुक्तम्—वैखरी शब्दनिष्पत्तिरिति ।

-वागित्युच्यते। प्रणव एव व्यानोदानाभ्यां सह वैखरीरूपं प्रतिपद्यते। अत एव हरिणा व्याकरणस्य त्रिविधा वाग् विषय इत्युक्तम्।

> वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
> अनेकतीर्थभेदायास्त्रय्या वाचः परम्पदम्॥

इति। एतत्—व्याकरणम्। अनेकतीर्थेति। श्लिष्ट-व्यक्तवर्णरूपा प्राप्तसाधुभावाऽपभ्रष्टा दुन्दुभिवेणुवीणा-दिशब्दरूपा चेत्यर्थः॥

---

(कुञ्जिकाटीका)

शकत्वासम्भवादधिष्ठातृदेवताकीर्तनम्। *व्यानोदानाभ्यामिति*। तथा च श्रूयते "अयं यः प्राणापानयोः सन्धिः स व्यानः यो व्यानः सा वाग्" इति। तथा योगशास्त्रेऽपि—

> हानोपादानचेष्टादि व्यानकर्मेति चोच्यते।
> उदानकर्म तत्प्रोक्तं देहस्योन्नयनादि यत्॥ इति।

*श्लिष्टव्यक्तेति*। व्यक्तवर्णा अव्यक्तवर्णा च साधुरसाधुश्चेत्यादि-केत्यर्थः।

---

(कलाटीका)

ननु वैखर्याः किं स्वरूपमत आह—*प्रणव इति*। सूक्ष्मेत्यादिः। वैखरीत्वोपपत्तये आह—*व्यानोदानाभ्यां सहेति*। तेनाभिव्यक्ता-विति शेषः। उदानस्य तत्र सत्त्वात्, व्यानस्य सर्वशरीरगतत्वेन तत्रापि सत्त्वादितिभावः। *अत एव*—पराया वर्णादिविशेषरहितत्वेनाव्यक्त-त्वादेव। तदेवाह—*वैखर्या इति*। अनेकतीर्थभेदायास्त्रय्या वैखर्या मध्यमायाः पश्यन्त्याश्च वाचः। एतद्(१)परं पदं स्थानमित्यद्भुतमि-त्यर्थः। तीर्थमुपायः प्रकार इति यावत्। (२)तदाह—*श्लिष्टेति*। वर्णांशे भेदद्वयम्। इदं पदांशे, तदाह—*प्राप्तेति*। ध्वन्यंशे आह—*दुन्दु-भीति*। *रूपा चेति*। या तस्या इति शेषः। व्याख्यातमिदं व्या-

---

(१) एतद्-व्याकरणम्, अद्भुतं-विलक्षणं, परमुत्कृष्टं, पदं स्थानमित्यर्थः। इति पाठोऽत्र दृश्यते।
(२) तत्र प्रकृत्यर्थमाह—*श्लिष्टेति*। इतिपाठान्तरम् ख० घ०।

( कलाटीका )

ख्यातृभिः। तत्र स्वपरोभयश्रोत्रविषया वैखरी, मध्यमा हृदयदेशस्था पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम्। पश्यन्ती तु लोकव्यवहारातीता। योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति परायां तु नेति त्रय्या इत्युक्तम्।

स्वरूपज्योतिरेवान्तः परा वागनपायिनी।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते॥

इत्युक्तेः। आह खल्वपि चत्वारि वागिति ऋक्मन्त्र (१)इति। स चेत्थं—

चत्वारि वाक्परिमितापदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति।

इति। वाचः परिमितानि शास्त्रे निर्णीतानि सूक्ष्मतरसूक्ष्मस्थूलस्थूलतररूपाः परा–पश्यन्ती–मध्यमा–वैखर्याख्या अवस्थाः। एवं चत्वारि पदानि, (२)यानि मनीषिणोऽध्यात्मकुशला ये ते विदुस्तासां मध्ये त्रीणि पदान्यवस्था गुहायामाधारनाभिहृदयेषु निहितानि नेङ्गयन्ति सर्वेषां ज्ञानविषया न भवन्ति, चतुर्थं वैखर्याख्यं मनुष्या वदन्ति, मनुष्यवदने प्रकटीभवतीत्येवमृक्भाष्ये माधवेन, नृसिंहोत्तरतापनीभाष्ये गौडपादैश्च व्याख्यातः। श्रीपतञ्जलिना तु नामाख्यातोपसर्गनिपाताश्चत्वारि पदानीत्यादिना पदचतुष्टयज्ञानसाध्यमनीषित्वसम्पत्तिरूपव्याकरणप्रयोजनपरतयाऽपि व्याख्यातः। उभयत्राप्यस्य तात्पर्यमभियुक्तव्याख्यानबलादवगम्यते। एवमन्येष्वपि निरुक्तादिव्याख्यातेष्वर्थेष्विति बोध्यम्। नन्दिकेश्वरकाशिकायामपीदमुक्तम्।

अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः।
आद्यमन्तेन संयोगादहमित्येव जायते॥
इकारादिलकारान्ता वर्णाः समभवन्ततः।
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्॥
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम्।
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः॥
वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते।
चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरपि॥ इति॥

इदमेवाभिप्रेत्य वागर्थाविवेत्युपमां चकार कालिदास इति दिक्।

---

(१) ऋक्मन्त्रे इति पाठान्तरम्। (२) "तानि" इतिपाठान्तरं पुस्तकान्तरे।

तत्र मध्यमायां यो नादांशस्तस्यैव स्फोटात्मनो वाचकत्वेनाक्षतिः। स च यद्यप्येकोऽखण्ड एकैकवर्णेनाप्यभिव्यज्यते तथाऽप्यन्त्यवर्णाभिव्यक्तो बोधहेतुः।

( कुञ्जिकाटीका )

*अन्त्यवर्णाभिव्यक्त इति*। तदाहुः—“सकृत्प्रतिपद्यमानो नावधार्यते अभ्यासेन तु स्फुटावभासः” इति। प्रथमाक्षरेण हि आभासमात्रं जन्यते तदुत्तरोत्तरवर्णकलापेन तु स्फुटतरपरिच्छेदः। संस्कारविशेषोत्पादन-

( कलाटीका )

एवं सृष्टिप्रक्रियामुक्त्वाऽपि प्रकृतमुत्तरमाह—*तत्रेति*। परादीनां मध्ये इत्यर्थः। परापश्यन्त्योर्योगिज्ञानविषयत्वादाह—*मध्यमायामिति*। *नादांशः*। नादसम्बन्धिविमर्शकशब्दरूपोंऽशः। तत्रैव विमृश्यांशस्यार्थस्य वाच्यत्वमग्रे वक्ष्यति। तस्य चेतनाचेतनमिश्रत्वात्। अत एवाह—*स्फोटात्मन इति*। *अक्षतिः*। प्रागुक्तानन्त्यव्यभिचारप्रयुक्तशक्तिग्रहासम्भवादिदोषाभावः। नन्वेवं तस्य स्वरूपसतो वाचकत्वे सर्वदार्थबोधापत्तिः, प्रत्येकं वर्णाभिव्यक्तस्य तत्त्वे प्रथमवर्णाभिव्यक्तादपि तदापत्तिः, वर्णाभिव्यक्तस्य तत्त्वे तद्धेतोरेवेति न्यायेन तत एव बोधोपपत्त्यैतद्वैयर्थ्यापत्तिः प्रागुक्तरीत्या समूहासम्भवाच्चात आह—*स चेति*। स्फोटरूपनादांश इत्यर्थः। उक्तहेतोरेवानुवदति—*एकोऽखण्ड इति*। अपिर्व्युत्क्रमे। अखण्डोऽपीत्यर्थः(१)। ननु समुदितानां व्यञ्जकत्वे तद्धेतोरिति न्यायेन तत एव बोधोपपत्त्या तद्वैयर्थ्यापत्त्या प्रागुक्तरीत्या समुदायासम्भवेन चाह—*एकैकेति*। तथा च न सर्वदाऽर्थप्रतीतिरिति भावः। अत एवाह—*तथापीति*। अन्त्यवर्णबुद्धिरपि पूर्वपूर्ववर्णानुभवाहितसंस्कारसहकृतैव तद्व्यञ्जिकेति बोध्यम्। *व्यक्तः*। व्यक्त एव। न चैवम् एकेनैव तेन तद्व्यञ्जने इतरवैयर्थ्यमिति वाच्यम्। यथा हि रत्नतत्त्वस्य प्रतीन्द्रियसन्निकर्षमभिव्यक्तावपि द्वाभ्यां तिसृभिश्च जनितसंस्कारसहकृतपरिपाकरूपसहकारिसम्पत्त्या जनिते चरमप्रत्यये विशदं चकास्ति रत्नतत्त्वम्, न प्राक्षु प्रत्ययेषु, तथा स्फोटः प्रत्येकमभिव्यक्तोऽपि चरमवर्णजाभिव्यक्तिजसंस्कारसहकृतपरिपाकवन्मनःपरिणामे चकास्ति। एवञ्च तदनन्तरमेवार्थधीर्न ततः

(१) अपिना समुदायसमुच्चयः। तथाच सर्वदाऽर्थप्रतीतिवारणेऽपि एकवर्णाभिव्यक्त्यनन्तरमर्थबोधापत्त्यादिरेवेति भावः। इति ग० पु० पाठः।

अतो नैकवर्णजाभिव्यक्त्युत्तरमर्थप्रत्ययः। तत्र च व्यञ्जकरूपप्रतिबिम्बनात्तद्रूपरूषितैव तदभिव्यक्तिरित्येकोऽपि नानात्वमिवापन्नः। यथा जलचाञ्चल्येनेन्दुप्रतिबिम्बस्य चञ्चलत्वेन ग्रहणम्। यथा च स्फटिकादेर्जपाकुसुमाद्युपाधिवशात्तद्रूपरूषितस्य भानम्। यथा च मुखे मणिकृपाणदर्पणाद्यभिव्यञ्जकवशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत्।

(कुञ्जिकाटीका)

द्वारेणाभिव्यक्तिविशेषस्य रलादौ दृष्टत्वात्। *रूषिता*—छुरिता। तथा च व्यञ्जकभेदोपाधिकः स्फोटभेद इति भावः। *जपाकुसुमादीति*। तदुक्तं हरिणा—

यथा रक्तगुणे तत्त्वं कषाये व्यपदिश्यते।
संयोगिसन्निकर्षात्तु वस्त्रादिष्वपि गृह्यते॥

यथारक्ते गुणे विद्यमानं तत्त्वं रक्तत्वं स्वाश्रयसमवायात्कषाये रक्तद्रव्ये व्यवह्रियते तथा सम्बन्धिनोः सम्बन्धाद्वस्त्रेऽपि रक्तत्वं व्यवह्रियते इत्यर्थः। ननु उप समीपवर्तिनि स्वीयं धर्ममादधातीति उपाधिरिति व्युत्पत्त्या जपाकुसुमोपाधिको लोहितः स्फटिक इति प्रत्ययो ऽस्तु, स्फटिकलौहित्ये जपाकुसुममुपाधिरिति प्रयोगः कथमिति चेत्, सङ्क्रा-

(कलाटीका)

प्राक् तदाह—*अत इति*। नन्वेवमपि तस्यैकत्वेन सकृदभिव्यक्त्या सर्वार्थबोधापत्तिरत आह—*तत्र चेति*। स्फोटे इत्यर्थः। वस्तुतो नानात्वाभावस्य वक्ष्यमाणत्वादाह—*नानात्वमिवेति*। तद्रूषिताऽभिव्यक्तिस्त्वित्थम्—अविभागमपि पदं वाक्यं च नानेव भागवदिवावयविप्रतीत्यनुसारेण व्यञ्जयन्ति वर्णाः स्वोपरागवश्यादिति। अत एव स्फुट्यते वर्णैः, स्फुटत्यर्थो ऽस्मादिति द्विविधं स्फोटशब्दनिर्वचनं कृतम्। अत्रासम्भावनावारणायोपाधिधर्मस्योपधेये भानविषयानेकदृष्टान्तपूर्वमाह—*यथेत्यादिना*। *मणीति*। तदुक्तं हरिणा—

यथा मणिकृपाणादौ रूपमेकमनेकधा।
तथैव ध्वनिषु स्फोट एक एव विभिद्यते। इति।

आदिना नानात्वादि। तद्वद् वस्तुतो धर्मरहितोऽप्यभिव्यञ्जकतज्ज्ञसंस्कारवशात् तद्धर्मवानिव प्रतीयते। ननु वर्णानां युगपदसत्त्वस्योक्त-

प्रतिबिम्बसमर्पकाश्च संस्कारास्ते च स्थिरा एव।

न चैवमनेककालिकतत्तद्वर्णाभिव्यक्ते औपाधिकनानात्वाभावापत्त्यनुगमाय जातिरावश्यकी। सहस्रदीपाभिव्यक्तपटस्येव(१)अनेकजपाकुसुमाभिव्यक्तस्फटिकस्येव च नानात्वाभावात्।(२)उपाधिभिन्नव्यञ्जकाभावान्न कदापि वर्णराहित्येन तत्प्रत्यक्षम्। येन क्रमेण च चित्ते संस्कारास्तेनैव क्रमेण व्यञ्जकरूपस्थापितता तस्येति स्वीकारान्न स-

( कुञ्जिकाटीका )

मकत्वमेव तत्र सतस्यर्थः। *समर्पकाः*—आपादकाः। समाधत्ते—*सहस्रदीपेति*।

ननु जपाकुसुमाद्युपाध्यभावेऽपि स्फटिकबोधवत् केवलस्फोटस्याभिव्यक्त्यापत्तिरत आह—*उपाधिभिन्नेति*। *येन क्रमेणेति*। ध्व-

( कलाटीका )

स्यात्कथं तेषां प्रतिबिम्बोऽत आह—*प्रतीति*। वर्णप्रतिबिम्बसमर्पकास्तु संस्कारा एवेत्यर्थः। एवेन तद्व्यावृत्तिः। ननु तेषामपि नष्टत्वम्, पूर्वगुणस्य स्वोत्तरजातगुणनाश्यत्वादत आह—*ते चेति*। ते त्वित्यर्थः। तेषामपि सविषयत्वात् यागजसंस्कारवत् यावत्कार्यमिति भावः।

*एवम्*। तेषां तत्र प्रतिबिम्बाङ्गीकारे। कालभेदेन तस्यापि भेदादाह—*अनेकेति*। *व्यक्ते*—स्फोटे। *आवश्यकीति*। आनन्त्यव्यभिचारवारणायेति भावः। *दीपेति*। पर्यायेणेति भावः। *जपेति*। नीलपीतादिद्रव्यसन्निधानेनानेकविधतया गृहीतस्य चेत्यपि बोध्यम्। *नानात्वेति*। वास्तवेत्यादिः। नन्वेवमपीदमेकं पदमित्यादिप्रत्यक्षेण स्फोटग्रहो यत्र तत्र वर्णानवभासात् प्रागुक्तदोष एवेति आह—*उपाधीति*। नन्वेवमपि प्रतिबिम्बने क्रमाभावात्सरो रस इत्यादौ दोष एवेति आह—*येनेति*। चस्त्वर्थे। वर्णोच्चारणक्रमसत्त्वादिति भावः। आत्मगुणत्ववारणायाह—*चित्ते इति*। अनुभवक्रमस्य बाधात्स्मृतिक्रमे च नियामकत्वेऽप्यत्र तदभावादाह—*तेनैवेति*। नन्वेवमपि तेषां सर्वेषां कालैक्येन तद्वदत्र कालघटितत-

(१) घटस्येति पाठान्तरम्।

(२) यद्वा नचैवमुपाध्युपगमे स्फटिकस्य स्वच्छत्ववत् कदाचित् वर्णरहितस्यापि पदस्य प्रत्यक्षत्वापत्तिरत आह—*उपाधीति*। एवञ्च बाधितैव प्रतीतिरिति भावः।

रे। एवं इत्यनयोरविशेषः । अत्र च तदुत्तरत्वग्रहश्चित्त-भित्तौ दैशिक एव । तदुपरागनाशिका च(१)तद्बोध्यार्था-कारवृत्त्यतिरिक्तवृत्तिरेव । अयञ्चान्तरत्वाच्छ्रोत्रग्राह्यवै-

( कुञ्जिकाटीका )

निसमानाकारैव स्फोटाभिव्यक्तिरिति भावः। *चित्तभित्तौ*-चित्तदेशे। ननु टकारव्यञ्जनदशायां घकारस्य नष्टत्वात् कथं तदुत्तरत्वग्रह इत्यत आह--*दैशिक एवेति*। ननु घटाकारस्फोटस्याभिव्यक्तत्वात्सर्वदा तदर्थबोधापत्तिरत आह—*तदुपरागेति*। उपरागोऽवभासस्तद्बोध्यो योऽर्थस्तदाकारा या वृत्तिस्तदतिरिक्तवृत्तिरित्यर्थः । *अयम्*--स्फोटः। *आन्तरत्वादिति*। अयम्भावः-स्फोटो द्विविधः-आभ्यन्तरो बाह्यश्च। तत्राभ्यन्तरो बुद्ध्यनुसंहतिरूपः। बाह्यस्तु जातिव्यक्तिभेदाद्-द्विविधः। सङ्घातवर्तिनी जातिरेव वाचिकेत्याद्यः । एकोऽनवयवः

( कलाटीका )

दुत्तरत्वग्रहासम्भवेन कथमविशेषकारणमत आह-*तत्र चेति*। प्रति-बिम्बरूप चेत्यर्थः। एतेन तद्व्यावृत्तिः। अत एव भित्तावित्युक्तम्। एकप्र-देशस्थघटपटकुड्यादिवत् । नन्वेवमपि तदुत्तरं सर्वदा तद्बोधा-पत्तिरत आह-*तदुपेति* । तत्प्रतिबिम्बेत्यर्थः । तत्र चेत्याद्युक्ति-मुपपादयन् अस्य श्रोत्रग्राह्यत्वं निराचष्टे-*अयं चेति*(२)। उक्तः स्फो-टश्चेत्यर्थः। हृदयदेशस्थत्वादाह-*आन्तरेति*। तत्र तत्त्वं च येन तदुल्लेखस्तत्त्वम्। अत एव प्राक् बुद्धेस्तद्विशेषणम् । एतेन श्रोत्र-ग्राह्यत्वस्य शुद्धान्तःकरणग्राह्यत्वस्य च व्यवच्छेदः । अत एव प्रागुक्तसिद्धिः। नन्वेवमपि पर्यायवाचक शब्देषु एकः स्फोटो नाना वा नान्त्यः, अनन्तानां तेषां तेषु शक्तीनां च कल्पनामपेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनस्य लघुत्वात् । नाद्यः, घटकलशादिपर्यायवाचकाभिव्यक्ते स्फोटे गृहीतशक्तिकस्य पुंसोऽप्रसिद्धतत्पदश्रवणेऽप्यर्थप्रत्ययापत्तेः, प्राक्गृहीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यञ्जनात् । न च तत्तत्पर्या-यवाचकाभिव्यक्तस्फोटे शक्तिग्रहस्तत्तत्पर्यायवाचकशब्दश्रवणेऽर्थधी-हेतुरिति वाच्यम् । एवं हि प्रतिपर्यायवाचकं शक्तिग्रहावश्यकत्वे

---

(१) "तद्बोध्यार्थाकारवृत्तिरेव" इत्येव पाठो द्वितीयपुस्तके

(२) नन्वस्याभिव्यक्तिः प्रागुक्ततत्रचेत्याद्युक्ता केनान्तः तदर्थं श्रोत्रग्राह्यत्वनिरासमाह *अयञ्चेति*। इति पाठान्तरम् ग० घ० पु०।

खरीसंस्कृतान्तःकरणग्राह्य एव। व्यञ्जकरूपरूषितस्य तस्यैवार्थे सङ्केतग्रहः। अतो घटकलशादिपर्यायाभिव्यक्ते स्फोटे गृहीतशक्तिकस्य पुंसोऽप्रसिद्धपदश्रवणे नार्थबोधः।

वैखरी तु।

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः॥

(कुञ्चिकाटीका)

शब्द इति व्यक्तिस्फोटः॥ *व्यञ्जकेति*। व्यञ्जकसमानाकारस्यैव व्यङ्ग्यस्य सङ्केतग्रह इत्यर्थः। *अर्थबोध इति*। अप्रसिद्धपर्यायश्रवणेऽर्थबोधो नेत्यर्थः॥

*वायोरिति*। कैश्चिद्वायोः कैश्चिच्छब्दतन्मात्रपरमाणूनां कैश्चिज्ज्ञानस्य शब्दत्वमिष्यत इति मतभेदः। तत्र शुद्धाचाति समष्ट्यहङ्कारेण ईश्वरोऽस्तीति भावितवतोऽपि स ईश्वरो द्वितीयेन सङ्कल्पेन छिद्रमभूत् तदाकाशम्। स ईश्वरः पुनः सङ्कल्पान्तरेण तस्मिन्नाकाशे वायुवेगसहायः शब्दरूपेण परिस्पन्दोऽभूत्। वाय्वनुग्रहादेव हि संयोगविभागहेतुर्गतिर्भवति। तथा च कात्यायनसूत्रं—"शब्दस्तदिति"। वाय्वात्मकः शब्द इति तदर्थः। तस्मिन् छिद्रे अन्तरं लब्ध्वा वायोर्वृद्धिरिति स्पष्टं हरिवंशे। आकाशरूपाद् ब्रह्मणः सकाशात्स्पर्शतन्मात्रापरपर्यायः सूक्ष्मो वायुः स्वकारणेन शब्देन स्वगुणेन स्पर्शेन च गुणवानिति वेदान्ते। केचिदज्ञा

(कलाटीका)

तत्तत्पर्यायवाचकगतशक्तिग्रहहेतुताया एव युक्तत्वात्। तव तु तत्तत्पर्यायवाचकाभिव्यक्तगतशक्तिग्रहत्वेन हेतुत्वे गौरवात्। अत आह *व्यञ्जकेति*। रूषितस्यैव तस्येत्यर्थः(१)*स्फोटे* एकस्मिन्। *नार्थेति*। कारणाभावात् (२)।

ननूक्तवैखर्या एव वाचकत्वं कुतो न? अभिव्यक्तेस्तत्रापि सत्त्वात्। किञ्च सा किमिति श्रोत्रग्राह्या। किञ्च तस्याः परंपरया पूर्ववत् परमात्मविवर्तविषयत्वेन तुल्यत्वापत्तिरत आह—*वैखरी त्विति*। अग्रेऽन्व-

(१) एवं स्फोटपर्यायेति पर्यायवाचकेत्यर्थः। इत्याधिकः पाठः क्वचित्।

(२) वक्तृश्रोतृव्यवहारस्य सर्वदा वैखरीसम्बद्धस्यैव सत्त्वेन तज्जन्यवासनावासितलोकबुद्ध्या वर्णरूषितपदस्यैव सर्वदावगाहनादिति भावः।

इति हर्युक्तेः, पातञ्जलभाष्ये व्यासेनापि तथोक्तेश्च, "आख्यातोपयोगे" (अष्टा०सू०१-४-२९) इति सूत्रे पतञ्जल्युक्तेश्च, वाय्वादिपरिणामरूपा कण्ठताल्वाद्यभि-

---

( कुञ्जिकाटीका )

नस्य शब्दत्वं वदन्ति ।

अथायमान्तरो ज्ञाता सूक्ष्मो वागात्मनि स्थितः ।
व्यक्तये स्वस्वरूपस्य शब्दत्वेन विवर्तते ॥ इति ।

अन्तःकरणमेव मनोवाय्वादिद्वारा शब्दत्वेन विवर्तत इति भावः । *पतञ्जल्युक्तेश्चेति* । तत्र हि—"आख्यातोपयोगे" इति सूत्रं नारब्धव्यमपक्रामति हि तस्माज्ज्ञानं यथा ज्वालारूपे ज्योतिरविच्छेदेनोत्पद्यमानं सन्ततं तथोपाध्यायज्ञानानि भिन्नशब्दरूपतापन्नानि सन्त-

---

( कलाटीका )

योऽस्य । अत एव तुः । *तथोक्तेश्चेति* । इत्थं हि तत् । वागिन्द्रियं वर्णेष्वेवार्थवत्, श्रोत्रं च ध्वनिपरिणाममात्रविषयमिति । ध्वनिर्नाम वागिन्द्रियादावुदानवायोरभिघाताज्जायमान उदानवायोराकाशस्य परमाणूनां वा परिणामभेदः । स च वर्णरूपोऽप्यवाचकत्वात् ध्वनिरिति तद्व्याख्यातारः । तथा च ध्वनिरूपः परिणाम इत्यर्थः । अत्र विशेषोऽग्रे व्यक्तीभविष्यति । *पतञ्जल्युक्तेश्चेति* । सूत्रखण्डनायोपाध्यायादपक्रान्तमधीयमानशब्दजातमुपादत्त इत्यर्थेनापक्रमजविश्लेषाश्रयत्वादपादानत्वं तत्र संसाध्य शब्दानामपक्रमणं न युक्तम्, अन्यथा सर्वथा तदापत्तिरिति शङ्कायां सन्ततत्वादित्यनेन शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना भिन्ना भिन्ना अपि सादृश्यात्तत्त्वेनाध्यवसीयमानाः श्रोतुः पुनःपुनरुत्पाद्यमानत्वेन सन्ततत्वमिति पुनःपुनः श्रोत्रप्रदेशं गच्छन्तः स्फोटरूपं शब्दमभिव्यञ्जयन्तीत्याशयकेन समाधाय, अथवा ज्योतिर्वत् ज्ञानानि भवन्ति"इति हि तत्रोक्तम् । यथा प्रतिक्षणं विनश्यदपि ज्वालारूपं ज्योतिरनवच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वेनाध्यवसीयमानं सन्ततमिति व्यवहारविषयस्तथैवोपाध्यायज्ञानानि भिन्नानि शब्दरूपतामापद्यमानानि सन्ततान्युच्यन्ते । ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकृत इति कैयटः । आदिना अणुज्ञानाकाशपरादिसंग्रहः । अस्यास्तात्त्विकत्वात्समसत्ताकत्वाच्चाह—*परीति* । अत एव पूर्वविरोधो न । एवेन नित्यत्वानिरासः । हरौ कैश्चिदित्यस्य प्रत्येकं त्रिषु सम्बन्धात्

घातजन्यैवेति बोध्यम्। वायोः-प्राणादिरूपस्य। अणूनाम्-शब्दतन्मात्रादिरूपपरमाणूनाम्।(१)

(२) आम्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः। इति हर्युक्तेः॥

( कुञ्जिकाटीका )

तानीति स्पष्टम्। *प्राणादिरूपस्येति*। यद्यपि बाह्यवायावपि शब्दोऽनुभवसिद्धस्तथापि न तस्येहोपयोग इति भावः। *चरमाणूनाम्*—परमाणूनाम्। *आम्राणीव*। आम्रफलानीव प्रचीयन्ते वर्धन्ते। *शब्दाख्या इति*।

*ते*-परमाणवः। शब्दाख्याः-शब्दनामानो भवन्तीत्यर्थः। वायोः शब्दत्वं हरिरेवाह—

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते॥

( कलाटीका )

केश्चित् वायोः कैश्चिदणूनां कैश्चित् ज्ञानस्य शब्दत्वप्राप्तिरिष्यते इत्यर्थः। तदाह-*वायोरिति*। औपाधिकं तस्य नानात्वमिति विनिगमनाविरहात् योग्यतयाऽऽह-*प्राणादीति*। अत एवोक्तं तेनैव।

लब्धाक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।
स्थानेष्वाभिहतो वायुः शब्दत्वं प्रतिपद्यते॥ इति।

वक्तुरिच्छेत्यनेनैकस्यैव वायोरनेकशब्दत्वोपपत्तिरुक्ता। (३) *शब्दतन्मात्रादिरूपपरमाणूनामिति*। आदिना स्पर्शतन्मात्रादि। अत्रापि मानं तदुक्तिमेवाह-*आम्राणीवेति*। *इदम्*-अग्रिमाग्रिमम्। *तत्र*।

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः'।

इत्यस्य पूर्वार्धम्। तस्याम् (४)। तस्याम् सत्यां तेन प्रेरितास्तदाख्याः परमाणवः (५)आम्रवत्प्रचिताः सन्तः शब्दाख्यास्तद्रूपताप्राप्त्या तद्वाच्या इत्यर्थः। उभयत्र मानमिदम्॥

---

(१) चरमाणूनामिति क्वचित्पाठान्तरम्। (२) अभ्राणीवेति पाठान्तरम्।

(३) *शब्दतन्मात्रपरमाणूनामिति*। तदाख्यपरमाणूनामित्यर्थः। इति पाठान्तरम् ख० पु०।

(४) व्यज्यमानायां सत्त्यामित्यर्थः।

(५) हस्तलिखितपुस्तकद्वयेऽपि "अभ्रवत् प्राचिता" इति पाठः। हस्तलिखितप्रथमपुस्तके तु "अभ्रवद प्राचिता भवन्तीत्यर्थः" इत्येव पाठः।

छायाऽऽतपतमांस्यप्येवम् ।
अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः।
छायातपतमःशब्दभावेन परिणामिनः ॥

इति तदुक्तेः। (१)ज्ञानस्य—वक्तृज्ञानस्य। पराशक्तिसाहित्येन च तत्परिणाम इति बोध्यम्। केचिदि-

(कुञ्जिकाटीका)

वक्तुरिच्छेत्यनेनैकस्यैव वायोरनेकशब्दरूपत्वोपपत्तिरुक्ता। आप्राणीवेत्यस्य पूर्वार्धं तु।

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः। इति ॥

छायातमसोस्तेजोऽभावरूपतां तार्किका वदन्ति, तान्निराकरोति—*छायातपेति*। यत्तु तेजोऽभाव एव तमः, न हि तस्य गुणाश्रयतास्तीति, तन्न। न ह्यस्मन्मते गुणाश्रयो द्रव्यमिति लक्षणमस्ति। किञ्च तमसस्तेजोऽभावरूपत्वे रूपाद्यभावेऽप्यन्धकारप्रत्यक्षापत्तिः। *अणव इति*। परमाणव एव सर्वशक्तिमत्त्वाद्भेदसंसर्गरूपा वृत्तिर्येषां कार्यभेदस्य सम्बन्धमाधातुं प्रवृत्ताः शब्दादिरूपेण परिणमन्त इत्यर्थः। परमाणूनां विलक्षणसम्बन्धाद्विभिन्नकार्योत्पत्तिरिति भावः। ननु दुग्ध-

(कलाटीका)

अत एव द्वितीयेऽन्यामपि तदुक्तिं वक्तुं तद्घटकतया प्रासङ्गिकमाह—*छायेति*। (२)*एवम्*-अणुपरिणामरूपाणि। तत्र मानं तदुक्तिमेवाह-*अणव इति*। तत्र बीजमाह-*सर्वेति*। अत एवाह-*भेदेति*। भेदः पृथग्भावः, संसर्गो मेलनं भेदसंसर्गरूपा वृत्तिर्येषां ते। *छायेति*। चतुर्णां द्वन्द्वस्य भावशब्देन स्वरूपार्थकेन षष्ठीतत्पुरुषः। *तदुक्तेः-हर्युक्तेः*। (३)प्रागुक्ताविरोधायाह-*परेति*। *तत्तदिति*। वाय्वादीत्यर्थः। अत एवात्र पक्षे तद्वैयर्थ्यशङ्का न। प्रकारान्तरेणाप्यविरोधायाह-*केचिदिति* (४)मतान्तरासत्त्वे एतदुक्तिरधिकेति स्पष्टमेव।

(१) इयञ्च प्रागुक्तस्य वायोरणूनामिति श्लोकस्य व्याख्या।

(२) न केवलमत्रैव तद्वदवयवः किन्त्वन्यत्रापीत्याह-छायातपेति*। इति पाठान्तरम् द्वितीये हस्तलिखितपुस्तके।

(३) ननु वाय्वादेरचेतनत्वात् कथमिदम्? किञ्चैवं सति वैखर्या अचेतनत्वापत्तिरित्येवं प्रागुक्तस्य विरोधस्य परिहारायेत्यर्थः।

(४) नन्वेवमपि प्रागुक्तहरिप्रक्रियाभ्यां विरोध एवात आह-*केचिदिति*। इति पाठान्तरम्।

त्यनेन पराशक्तिरेव(१) मध्यमाद्यत्परिणामविशेषो अ-न्येषां मते वैखरीति सूचितम् । तदाह--प्रवादेषु—शास्त्रेषु । अत्र—विषये । दर्शनभेदः--सिद्धान्तभेदोऽनवस्थित इति ।

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।

( कुञ्जिकाटीका )

परमाणुजन्यत्वस्य दध्नः स्वीकारे दध्नो ऽपि दुग्धत्वापत्तिरतस्तज्जनकपरमाणूनां भेद एवोचित इति चेन्न । शक्तिभेदादेव कार्यभेदात् । यत्तु द्रव्यत्वव्याप्यजातिः परमाणौ नास्तीति तार्किकाः, तन्न । तथा सति द्रव्यत्वव्याप्यं यन्मूर्तत्वं तद्व्याप्यस्य पृथिवीत्वादेरपि तत्रानापत्तेः । *वक्तृज्ञानस्येति* । घट इति जानामीत्यादौ ज्ञानशब्दयोरभेददर्शनादिति भावः । *आत्मा बुद्ध्येति* । *सः—वायुः* । उदीर्णः—उद्गतः । *वक्त्र-

( कलाटीका )

एवेन वाद्यादिव्यवच्छेदः । पश्यन्त्यां तत्त्वस्य निर्विवादत्वादाह-*मध्यमेति* । *परीति* । विवर्तेत्यर्थः । तत्र कर्मणि घञित्याह-*शास्त्रेष्विति* । *विषये-वैखरीरूपे । निदर्शनादिनिरासायाह-*सिद्धान्तेति* । इतिस्तदर्थसमाप्तौ । किञ्च ।

अथायमान्तरो ज्ञाता सूक्ष्मेवागात्मना स्थितः ।
व्यक्तये स्वस्वरूपस्य शब्दत्वेन विवर्तते ॥

ज्ञाता वृत्तिविशिष्टमन्तःकरणं स मनोभावमापद्य तेजसा पाकमागतः तेजसा जाठरेण पाकं दाहकं वायुमाविशति प्राणमथासौ समुदीर्यते असौ सवृत्तिमनोयुतः प्राणः । तदाह—

अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसा सो ऽपि पच्यते ॥

तद्धर्मेण दाहेन दाहवशादेव विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ध्वनिरूपैः सहेति शेषः । प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयत इति तेनोक्तम् । प्राणः सवृत्तिकमनोरूपान्तःकरणयुतः । एतावतैव ज्ञानस्य शब्दत्वमिति बोध्यम् । नन्वेवं शिक्षाविरोधस्तत्र परिणामानुकेरत आह-*आत्मेति* । तात्पर्यार्थमादावविरोधायाह-*मा-

(१) शक्तेरेवेति पाठान्तरम् ।

वर्णान् जनयते ।

इति शिक्षायामपि (१)मारुत एव नाभेरूर्ध्वमुच्चरन् मूर्ध्न्यभिहत(२) आत्मानं तत्त्वेनाभिव्यनक्तीत्यर्थः(३) । आत्माऽन्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या समेत्यैकबुद्धिविषयीकृत्य तद्बोधनेच्छायुक्तमनोऽभिहतकायाग्निप्रेरितो वायुर्मूर्धपर्यन्तं गतस्ततः प्रतिनिवृत्तो वक्त्राभिघातेन वर्णान् जनयतीत्यक्षरार्थः ।

( कुञ्जिकाटीका )

मिति* । शिरःकपालेनावष्टब्ध ऊर्ध्वगतिमलभमानस्ततः प्रत्यावृत्त्य वक्त्रमेव प्राप्येत्यर्थः । सङ्गीतरत्नाकरेऽपि ।

आत्मा विवक्षमाणो हि मनः प्रेरयते मनः ।
देहस्थं वन्हिमाहन्ति स प्रेरयति मारुतम् ॥
ब्रह्मग्रन्थिस्थितः सोऽथ क्रमादूर्ध्वपथे चरन् ।
नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयति ध्वनिमिति ॥

विवक्षमाणः वक्तुमिच्छन् आत्मा अतःकरणं मनस्संज्ञकं प्रेरयति, तं मनः देहस्थमग्निं ताडयति स वह्निर्वायुं प्रेरयति स वायुरूर्ध्वं गच्छन् आघातेन मुखादिषु ध्वनिं जनयति । "असङ्गो ह्ययं पुरुषः" इति श्रुतेरकर्तृस्वरूपस्यात्मनः प्रयोजकत्वासम्भवादाह—*अन्तःकरणमिति* । अन्तःकरणपरिणामपरावृत्तिरूपा बुद्धिरिति भावः । वाक्यविषयस्यान्तःकरणगतत्वाभावादाह-*संस्काररूपेणेति* । एतदभिप्रायेणैव सूक्ष्मरूपेणावस्थानमित्युच्यते । एकाङ्गुलं देहमध्यमग्निस्थानं ततो नवाङ्गुले चतुरङ्गुलो देहस्य कन्द इति ब्रह्मग्रन्थिरिति चोच्यते ।*उद्यन्*। उद्गच्छन् ।

( कलाटीका )

रुत एवेति* । कर्तृत्वादेरेवात्मधर्मत्वादाह-*अन्तःकेति । अर्थशब्दार्थमाह—*संस्केति । गत्यर्थानां ज्ञानार्थत्वादाह—*स्व बुद्धीति* । वेगात् निवृत्तः । वक्त्रं प्राप्येति शेषः । *वक्त्रेति* । उक्तयत्नसहायेन जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानाभिघातेनेत्यर्थः ।

(१) पराख्यमन्तःस्थितं शब्दं वर्णत्वेनाभिव्यनक्ति इत्यर्थः ।
(२) अन्येन पुनरुच्यतोऽभिहन्यमानः ।
(३) उच्चरन् इत्यस्य स्थाने "उद्यन्" इति पाठान्तरम् । अत्र "अर्थो वा" इत्यपि पाठः ।

तदुक्तं "परःसन्निकर्षः" (अष्टा०सू०१-४-१०९) इति सूत्रे भाष्ये—"उच्चरितप्रध्वस्तानां सन्निकर्षः पौर्वापर्यं चानुपपन्नम्" इत्याशङ्क्य

"बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः ॥

( कुञ्जिकाटीका )

*उच्चरितेति* । क्रमोत्पन्ना अपि वर्णा यदि तिष्ठेयुस्तदा स्यात्पौर्वापर्यमत उक्तम्—*प्रध्वस्तानामिति* । उच्चारितप्रध्वंसित्वं चोच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वम् । (१)नष्टाविद्यमानयोः सम्बन्धासम्भवात्सन्निकर्षो न सम्भवति नापि संहितेति भावः । ननु पूर्वकालोत्पन्नः पूर्वः, परकालोत्पन्नः पर इति कथंचित् पौर्वापर्यम्भव इति चेत्सत्यम् । यदि कालिकं पौर्वापर्यं गृह्येत तदा पूर्वपरयोर्युगपत्स्थित्यभावात् "इको यणचि"इत्यादिसंहिताकार्यासम्भवः । बुद्धिकल्पित एव सर्वः पौर्वापर्यसन्निकर्ष इत्याह—*बुद्धौ कृत्वेति* । *बुद्धौ*—अन्तःकरणे । *चेष्टाः* शब्दान् कृत्वा—प्रतिबिम्बितान् कृत्वा । अन्तःकरणस्य स्वच्छतया वा स्वशब्दरूपापत्त्याऽन्तःकरणवृत्तित्वेन प्रतिभानादिति भावः । शब्देन सह वाच्यानर्थान् बुद्धिरूपे देशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः । *(२)तन्वन्नीतिरिति* । तननं तत् सा

( कलाटीका )

प्रागुक्तपूर्वपक्षसिद्धान्तभूतार्थे सर्वत्र मानमाह—*तदुक्तमिति* । प्रागुक्तं सर्वमभिप्रेत्य तत्सूत्रभाष्ये इत्याशङ्क्य इत्याशङ्कां कृत्वा बुद्धावित्यादि सिद्धान्ततयोक्तमित्यर्थः । कथमुक्तमित्याशङ्कायां विशेषमाह—*उच्चरीति*(३) । सन्निकर्षः संहितासंज्ञोपयोगिपौर्वापर्यमकालव्यवायम् । संहितेति न्यासान्तरे । तदुपयोगि-बोधोपयोगि चोभयम् , अर्द्धमात्राकालातिरिक्तकालव्यवायशून्यमिति तदर्थः । *आशङ्क्येति* । एकैकवर्णवर्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानाम् एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्चारयति गौरिति यावद्गकारे वाग्वर्तते नौकारे न विसर्गे च, यावदौकारे न गकारे न विसर्गे च, यावद्विसर्गे न गकारे नौकारे(४) चोच्चरितप्रध्वंसिनः खल्वपि वर्णा उच्चरितः प्रध्वस्त इति, अ-

(१) ध्वंसप्रतियोगिनष्टविद्यमानयोः इतिपाठो हस्तलिखितपुस्तकद्वये ।
(२) अत्रत्य टीकादर्शनतो भाष्ये "तन्वन्नीतिः" इति पाठो विज्ञायते ।
( ३ ) तत्रादौ पूर्वपक्षमाह—*उच्चरीति* । इति पाठान्तरम् ।
( ४ ) अन्येऽच· इति पाठान्तरम् ।

**शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ।**

बुद्धिविषयमेव शब्दानां पौर्वापर्यम् । य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति–अस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः, अस्मिंश्च शब्देऽयं तावद्वर्णस्ततोऽयं ततो ऽयम्" इति । 'तन्वन्नीतिः सकलविषयव्यापिबुद्धिः धीरः पण्डितः कर्ता बुद्धौ अन्तःकरणे चेष्टाः कण्ठताल्वाद्यभिघातव्यापारजन्यशब्दान् प्रतिबिम्बितान् कृत्वा शब्देन सहितान् तद्वाच्यानर्थान् बुद्धिरूपे

( कुञ्जिकाटीका )

अस्ति यस्या सा तद्वती सकलविषयव्यापिनी एतादृशी नीतिर्बुद्धिर्यस्य स तद्वन्नीतिः। क्वचित्तन्वन्नीतिरिति पाठः । तत्र तन्वती सकलविषयव्यापिनी बुद्धिर्यस्येत्यर्थः। भाष्यकारः कारिकार्थमाह—*बुद्धिविषयमिति* । तदेवोपपादयति-*य एष इति* । सदसद्विवेचनी बुद्धिः प्रेक्षाबुद्धिः। *अन्तःकरणे इति* । अन्तःकरणमेव निश्चयरूपवृत्तिदशायां बुद्धिसंज्ञां लभते । *प्रतिबिम्बितानिति* । अन्तःकरण-

( कलाटीका )

थापरः प्रयुज्यते न वर्णो वर्णस्य सहाय इत्यनेनेति शेषः । अथ तद्वर्णध्वंसानन्तरमपरो वर्णः प्रयुज्यते तावताऽपि स पौर्वापर्यादिव्यवहारे न वर्णान्तरस्य सहाय इति शेषशेषार्थः। उक्तमिति शेषः(१)। किं तदाह–*बुद्धाविति* । *तन्वन्निति*। तन्वती विषयान्व्याप्नुवंती नीतिर्बुद्धिर्यस्य सः। तद्वदिति पाठे तननं तत् साऽस्ति यस्याः सा तद्वती सकलविषयव्यापिनी नीतिर्बुद्धिर्यस्य स इति स एवार्थः। ये गत्यर्थास्ते ज्ञानार्था इति नीतिर्बुद्धिस्तदुभयसाधारणतया तदर्थमाह-*सकलेति*। रणाद्युपयोगिधैर्यानुपयोगादाह–*पण्डित इति* । *कर्त्ता–प्रयोक्ता श्रोता च । अनेके काला अनेकाः क्रिया इत्यर्थे पौनरुक्त्याद्नुपयोगाच्च तज्जन्यत्वात्ताच्छब्द्यमित्याह-*कण्ठेति*। अत एव तत्करणासम्भवात् कृत्वेत्यस्य लक्ष्यार्थमाह-*प्रतीति* ।शब्देनेत्यस्यानर्थक्यादेराह-*सहितानिति* शाब्दबोधे शब्दस्य प्रकारतया भाने इदमपि भाष्यं प्रमाणम्। प्रत्यासत्तेराथिकमाह-*तदिति* । बुद्धावित्यस्यार्थमाह-*बुद्धीति* । अन्तःकरणे-

(१) इत्यनेन परकृतां शङ्कां श्रुत्वेत्यर्थः। समाधिमाह—*बुद्धाविति* इतिपाठान्तरम् ।

देशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः'। बुद्धिविषयमित्यस्य बुद्धिस्थशब्दविषयमेवेत्यर्थः। तत्र वक्तृदेशेनैव शास्त्रप्रवृत्तेस्तस्यैव धर्मफलश्रवणाच्च वक्तृबुद्धिस्थत्वमुपपादयति-य इति। अस्मिन्नर्थे इति। एतदर्थमेव बुद्धावर्थदर्शनमप्युक्तम्। श्लोके पौर्वापर्यमित्युपलक्षणम्। अयमिति बुद्ध्युपारूढस्वमात्रश्रव्यसूक्ष्मोच्चारणव्यङ्ग्यशब्दपरामर्शः। अन्यथा इदमः प्रत्यक्षपराम-

( कुञ्जिकाटीका )

वृत्तिप्रतिभातानित्यर्थः। *तत्रैव*-बौद्धशब्दे एव। बुद्धिपौर्वापर्यस्य निराकरिष्यमाणत्वादाह-*बुद्धिस्थेति*। *वक्तृदेशेनैवेति*। वक्तृबुद्धिस्थमुद्दिश्यैवेत्यर्थः। बाह्यशब्दे प्रक्रियाया असम्भवादिति भावः। *तस्यैव*-वक्तुरेव। *धर्मफलश्रवणादिति*। शास्त्रफलधर्मश्रवणादित्यर्थः। *एतदर्थमिति*। शब्दप्रयोगस्यार्थविशेषनियन्त्रितत्वाद् बुद्धौ अर्थदर्शनमप्युक्तमित्यर्थः। *उपलक्षणमिति*। पूर्वोक्तस्य बोध्यबोधकभावस्यापीत्यर्थः। *अयमितीति*। बुद्ध्युपारूढत्वेनैव श्रवणीयं यत्सूक्ष्ममुच्चारणं तेन व्यङ्ग्यः शब्दो भाष्यस्थेनेदंशब्देन परा-

( कलाटीका )

त्यर्थः। अत्र मध्यमणिन्यायेनान्वय इत्याह-*तत्रैवेति*। तद्देशे एवेत्यर्थः। प्राग्वदेवाह-*य्येति*। तदनन्तरं तेषां शब्दानामर्थानां चेतच्छब्दोत्तरमयं शब्द एतद्वर्णोत्तरमयं वर्ण एतत्क्रियोत्तरामियं क्रियेत्येवं रूपं तं शास्त्रे लोके च कुर्यादित्यर्थः। नन्वेवं बुद्धिविषयमिति व्याख्यानमनुपपन्नं षष्ठीतत्पुरुषे पुंस्त्वौचित्यात्, बहुव्रीहौ तस्य शब्दविषयकत्वेन बुद्ध्यविषयकत्वेन बाधादत आह-*बुद्धीति*। तास्थ्यात्ताच्छब्द्यमिति भावः।बुद्धेः साकाङ्क्षत्वादाह-*तत्रेति*। शब्देष्वित्यर्थः। विशेषग्रहणे बीजमाह-*वक्तृदेशेनैवेति*। *तस्यैव-वक्तुरेव*। *धर्मेति* शास्त्रस्य धर्मरूपफलेत्यर्थः। "एकः शब्दः" इत्यादिश्रुतेरिति भावः। नन्विदमधिकं श्लोके पौर्वापर्यस्यैवोक्तत्वादत आह-*एतदर्थमेवेति*। अन्यथा तदानर्थक्यं स्पष्टमेव। अपिना शब्ददर्शनसमुच्चयः। नन्वेवं तत्र न्यूनताऽत आह-*श्लोके इति*। अत एव सन्निकर्षोपपत्तिरपीति भावः। *इति* इत्यनेन। मात्रपदेन परव्यवच्छेदः। तथाच मध्यमास्थनादांश एव विवक्षि-

र्शकत्वादेतदनुपपत्तिः । शब्दः प्रयोक्तव्यः–पर(१)प्रत्यक्ष योग्यस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यङ्क्तव्यः । अस्मिन् शब्दे इत्यस्य व्यञ्जनीये इति शेषः ।

यत्तु बुद्धिगतपौर्वापर्यस्य वर्णेष्वारोप(२) एतद्भाष्यार्थ इति, तन्न । तद्वदेव तद्बुद्धीनामप्युत्पन्नविनाशितया प्रत्यक्षपरामर्शकेदमादिघटिताभिलप्यमानस्य पौर्वापर्यस्य तत्राप्यसम्भवात् । प्रकृतिविकृतिभावोऽप्यन्तःकरणस्ये·

(कुञ्जिकाटीका)

मृश्यत इत्यर्थः । *अन्यथेति* । बौद्धशब्दपरामर्शो इत्यर्थः । *परेति* । परबोधानुकूलोच्चारणेन व्यञ्जनीय इत्यर्थः । *व्यञ्जनीय इति* । वर्णानां शब्दव्यञ्जकत्वमेवेति भावः । *तद्वदेवेति* । वर्णवदेव वर्णबुद्धीनामप्यनित्यतया प्रत्यक्षपरामर्शकेनेदंशब्देन विषयीकरणासम्भवादित्यर्थः । मन्मते तु व्यङ्ग्यशब्द इदमा परामृश्यत इति भावः । ननु इकारादीनां बुद्धिस्थत्वे कथं तस्य यकाराद्यादेशबुद्धिरत आह––*प्रकृतिविकृतिभावोऽपीति* । सत्कार्यवादे कार्यकरणयोरभेदाद् बुद्धिस्थत्वेन रूपेण प्रकृतित्वं बाह्यरूपेण विकृतित्वं तथेहापि स्पष्टमिति कार्य·

(कलाटीका)

तः । *अन्यथा*–परादिस्थग्रहणे । *एतदिति* । व्यवहारेत्यर्थः । अथ पौर्वापर्यमाह–*अस्मिन्निति(३)* । अत एवाह–*व्यञ्जेति* ।

प्राचोक्तं खण्डयति––*यत्त्विति* । *तद्वदेव*––वर्णवदेव । एवमग्रेऽपि । पूर्वहेतुना भाष्ये युगपदुपलम्भस्यापि निरस्तत्वात् बुद्धिरत्र प्रत्यक्षं नान्तःकरणमित्याह–*तद्बुद्धीनामिति* । आदिना देशादि । *तत्रापि*––बुद्धिष्वपि । अपिर्वर्णस्यैव समुच्चये । एवं प्रागपि । एवं चेकोयणचीत्यादौ दोषतादवस्थ्यमेवेति भावः । नन्वेवं कथम् "इको यण्" इत्यादौ वर्णानां प्रकृतिविकृतिभावोऽत आह–*प्रकृतीति* । एवञ्च न वर्णनाशः (४) । किन्तु

---

(१) "प्रत्यय" इतिपाठान्तरम् । (२) "इत्येतत्" इतिपाठान्तरम् ।

(३) अत एव तस्यासत्त्वात् पौर्वापर्यप्रतिपादकव्याख्यानेऽपि तथैवाह––*अस्मिन्निति* । अयं तावद्वर्ण इत्यस्यायं वर्णः प्रथममुच्चारणेनाभिव्यङ्ग्य इत्यर्थः । तथा चेदं बुद्धिदेशे युगपदवस्थितानां पौर्वापर्यं प्रत्यक्षतया परामृशतीति भावः । इति पाठो दृश्यते च पुस्तकान्तरे क्वचित् ।

(४) वर्णानां सः इति पाठान्तरम् ।

कारबुद्धिमपहाय यकारबुद्धिकरणादुपपद्यत इति स्थानिवत्सूत्रे (अष्टा० सू० १-१-५६) भाष्ये स्पष्टम्। अयं च शब्दस्तत्तत्प्राणिहृदयदेशावच्छिन्नाकाशदेशस्थः सर्वसमष्टेर्विराजो हृदयरूपबाह्याकाशदेशस्थश्च। स च लाघवादेक एव विभुः। यथैकत्र श्वेतद्रव्ये रूपं व्यापकं तथा

---

( कुञ्जिकाटीका )

विपरिणामादिति तत्र समाहितत्वात्। कार्या बुद्धिः, तस्या विपरिणाम इत्यर्थः।

*अयं च शब्द इति*। ध्वनिव्यङ्ग्यतया वाचकत्वेन स्वीकृत इत्यर्थः। *समष्टेरिति*। वनमित्याकारिका एकताबुद्धिः समष्टिः।मायादिभुवनान्तं विराट्पुरुषस्य शरीरं स्थूलदेहसमष्ट्या विराडुच्यते। विराजो हृदयदेश एव ह्याकाश उच्यत इत्यर्थः। *देशस्थश्चेति*। व्यापकत्वादुभयदेशस्थ इत्यर्थः। *स चेति*। शब्दश्चेत्यर्थः। *यथैकत्रेति*। यत्र तु भिन्नावयवावच्छेदेन रूपभेदस्तत्र रूपमव्याप्यवृत्त्येवेति भावः। एतेन तदर्थं चित्ररूपस्वीकारोऽपास्तः।

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।

इति स्मृतिविरोधात्। किञ्चैवं सुरभ्यसुरभिकपालारब्धघटस्य निर्गन्धत्वमेव वाच्यम्। तथा च गन्धम्प्रति पृथिवीत्वेन हेतुत्वस्य व्यभिचारः। *तथेति*। रूपादिवच्छब्दस्यापि व्याप्यवृत्तित्वं न्याय्यम्। यथा हि व्यापकस्यापि रूपस्य चक्षुस्संयोगसमानाधिकरणस्यैव प्रत्य-

---

( कलाटीका )

बुद्धिविपरिणाममात्रमिति भावः। *स्थानिवदिति*। "सर्वे सर्वपदादेशा" इत्यादिनेति भावः। वक्ष्यमाणभाष्याविरोधाद्यर्थमाह—*अयञ्चेति*। प्रागुक्तः स्फोटात्मेत्यर्थः। *तत्तत्प्राणीति*। अनेन हिरण्यगर्भस्यापि सङ्ग्रहः। विनिगमनाविरहादाह—*सर्वेति*। अनेन ध्वन्यात्मकशब्दस्यापि सङ्ग्रहः। तस्य प्रत्यक्षत्वायाह—*स चेति*। तदुभयदेशस्थशब्दश्चेत्यर्थः। लाघवमुभयत्र हेतुः। नन्वेवमनेकत्वापत्तिरिति कथं प्रागुक्तमेकत्वमत आह—*एक एवेति*। नानात्वे गौरवस्यैकत्वे दोषाभावस्य चोक्तत्वादिति भावः। युक्तं च विभुत्वमित्याह—*यथैकेति*। सर्वसम्बन्धादिति भावः। *व्यापकम्*—तद्व्यापकम्। आकाशदेशेति बहुव्रीहिः। सर्वसम्बन्धादाश्रयस्य व्यापकत्वादौपाधिकभे

अस्याप्याकाशदेशस्थस्य तथात्वमुचितम् ।"एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत् सर्वयागेष्वङ्गं भवति" इति "स्वरूपसूत्रे" (अष्टा० सू० १-२-६४) भाष्यात् । प्रादुर्भूतोऽभिव्यक्तः । स एव कत्वादिनाऽभिव्यक्तः श्रोत्रग्राह्यः

( कुञ्जिकाटीका )

क्षम, एवं देशान्तरे शब्दप्रत्यक्षतेति भावः । *इन्द्रशब्द इति*। मीमांसकैश्चतुर्थ्यन्तशब्दातिरिक्ताया देवताया अस्वीकारात् । शाब्दिकमतेऽपि शब्दार्थयोरभेदाद्देवतारूपत्वं मन्त्रस्य । विग्रहवत्त्वं स्वीकृत्य तु देवतानां कर्मानधिकार उक्तः । उत्तरमीमांसायां शब्दानामर्थपरत्वस्यौत्सर्गिकत्वात्प्रयोगसमवेतार्थस्मृतावेव तात्पर्यम्, नाज्ञातदेवताविग्रहादावपीति तु मन्त्राधिकरणस्याशयः । *भाष्यादिति* । जातिरेव शब्दार्थ इत्युपक्रम्य "एक एवेन्द्रशब्दः सर्वेषु यागेषूपकरोति" इत्युक्तत्वात् । एतच्च शब्दस्य व्यापकत्व एव युज्यते । *कत्वादिनेति* । ध्वनिगत-

( कलाटीका )

देऽपि वस्तुत एकत्वाच्चेत्यर्थः । अत्र भाष्यसम्मतिमप्याह—*एक इति* । यद्यपि भाष्ये एकस्यानेकाधिकरणस्य युगपदुपलम्भे दृष्टमादित्यदृष्टान्तमेककर्तृकस्य तस्यासम्भवात्संखण्ड्य "एवं तर्हीतीन्द्रवद्विषयः । तद्यथा—इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत्सर्वत्राङ्गं भवति, एवमाकृतिर्युगपत्सर्वत्र भविष्यति" इत्युक्तं, तथापि इतीन्द्रेत्यत्र साकाङ्क्षत्वात् वाक्यस्यैकस्याप्यनेकः इति वाक्यशेषः । एकस्यापीन्द्रशब्दस्य यथानेको यागोऽङ्गित्वेन विषय एकबौद्धज्ञानविषयश्च एकदेशावच्छिन्नानेकयागेषु तथा दर्शनसम्भवात्, तथा एकस्या अपि जातेरनेको विषय आश्रयतयेत्यर्थः । इन्द्रशब्दस्या(१)प्रादुर्भाव इत्यर्थेन शब्दप्रादुर्भावेऽव्ययीभावे कृते वतिप्रत्ययः । इन्द्र इत्यादेरिन्द्र इन्द्रशब्द आहूतः प्रादुर्भूतः, सर्वत्राङ्गमिति शेषः(२) सर्वेषु यागेषु युगपत् प्रादुर्भावविषयेन्द्रशब्दरूपा तद्बोध्या वैका देवता व्रीह्यादिद्रव्यवदङ्गतां प्रतिपद्यत इत्यर्थः । तदभिप्रेत्याह—*इन्द्रशब्द इत्यादि* । शतशब्दो बहुपरः । आह्वानफलमाह—*प्रादुरिति* । नित्यत्वादाह—*अभीति* । अयञ्चेत्याद्युक्तार्थे भाष्यान्तरमपि मानमिति सूचयन्नाकाशदेशत्वे मानमाह—*स

(१) "इन्द्रस्याप्रादुर्भाव" इति पाठान्तरं मुद्रिते पुस्तके । (२) 'विशेष' इति मुद्रिते पुस्तके ।

पदादिरूपेण तु बुद्धिग्राह्य इत्यणुदित्सूत्रे(१)भाष्ये स्पष्टम्। तत्र हि श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेश इत्युक्तम् ॥

( कुञ्जिकाटीका )

कत्वादेस्तत्रारोपात्। *पदादिरूपेणेति*। पदे वर्णाभावाद् बुद्धिपरिकल्पितं पदत्वमिति भावः। भाष्ये कथमिदं स्पष्टमत आह—*तत्रहीति*। *श्रोत्रोपलब्धिरिति*। श्रोत्र एवोपलब्धिर्यस्येत्यर्थः। श्रोत्रोपलब्ध्या

( कलाटीका)

एवेति*। आकाशदेशस्थ एवेत्यर्थः। आदिना वाक्यम्। बुद्धिरन्तःकरणमेव। *उक्तमिति*। "अस्य च्वौ" इत्याद्यकारस्य वर्णसमाम्नायस्थाकारतो भेदेनानण्वात्सवर्णाग्राहकत्वाशङ्कायाम् "अवर्णस्यैकत्वात्सिद्धम्" इति समाधिप्रघट्टके तस्य एकत्वे एकस्य पुंसो युगपदनेकदेशेषूपलम्भो न स्यात्। उपलभते त्वकारमेको द्रष्टाऽनेकाधिकरणस्थमादित्यदृष्टान्तेनेति, एकत्वनित्यत्वे एवेत्याशङ्क्योक्तरीत्याऽऽदित्यदृष्टान्तं संखण्ड्य "शब्दस्याकाशरूपैकाधिकरणत्वेनानेकाधिकरणत्वमेवायुक्तम्' इत्याशयेनाकारमप्यनेकाधिकरणस्थं नोपलभते किं कारणम्? यत इत्युक्त्वोक्तमित्यर्थः। अत एव तदग्रे 'एकं च पुनराकाशम्' इत्युक्तम्।

तत्र श्रोत्रोपेत्यस्य श्रोत्रे एवोपलब्धिर्यस्येत्यर्थः। करणक्तिन्नन्तेन समानाधिकरणबहुव्रीहिर्वा। एतद्विशेषणफलं तु शब्दस्याकाशदेशत्वप्रतिपादनम्। न च दिश एव श्रोत्रत्वात्कथं तत्रोपलब्ध्याकाशदेशत्वसिद्धिरिति वाच्यम्। कर्णशष्कुल्यवच्छिन्ननभस आकाशप्रदेशविशेषस्य श्रोत्रत्वात्। चक्षुरादिवच्छ्रोत्रस्यापि भूतत्वावश्यकत्वात्। दिगनतिरिक्तमेवाकाशमिति तत्त्वात्।

नन्वेवमप्यतेजोंशघटादिगतरूपस्य(२) तैजसचक्षुर्ग्राह्यत्ववदनाकाशदेशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्वं किं नेति चेत्। किमसम्बद्धं तद्ग्राहकं सम्बद्धं वा? नाद्यः। रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणापत्तेः। अन्त्येऽपि किं श्रोत्रस्य विषयदेशगमनात्सम्बन्ध उत शब्दस्य श्रोत्रदेशागमनात्। नोभयम्। उभयोरपि निष्क्रियत्वेनागमनात्। दूरदेशस्थशब्दाग्रहणं तु दूरत्वादेर्दोषस्य प्रतिबन्धक-

(१) क्वचित् "अइउण्" सूत्रे इतिपाठान्तरम्। (२) "मठादिरूपस्य" "तैजसः" इति पाठान्तरम्।

तत्र श्रोत्रोपलब्धित्वं कत्वादिनाऽभिव्यक्तत्वम् । (१) पदादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम् । म च प्रयो·

( कुञ्जिकाटीका )

च शब्दस्याकाशदेशत्वं प्रतिपादितम् । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वादाकाशदिशो नातिरिक्तत्वमित्यभिप्रायेण देशशब्दप्रयोग आकाशे बोध्यः । यदि तु शङ्खादीनामेव गुणः स्यात्तदा निष्क्रियस्य शब्दस्य श्रोत्रपर्यन्तं गमनं न सम्भवति, श्रोत्रस्य वा तत्पर्यन्तं गमनं न सम्भवतीति श्रोत्रसम्बन्धाभावात्प्रत्यक्षं न स्यात् ।

भाष्यस्थविशेषणत्रयेण रूपत्रयं दर्शयति-*तत्रेत्यादिना* । तार्कि·

( कलाटीका )

त्वाच्छ्रोत्रदेशे अनभिव्यक्तेः । तथाच तस्याकाशदेशत्वमभ्युपेयम् । तथा सति तद्वदेव तस्यापि व्यापकत्वेन श्रोत्रदेशे ऽभिव्यक्तस्य तेन ग्रहः । नन्वेवमनेनैव बुद्धिविषयत्वरूपबुद्धिनिर्ग्राह्यत्वमुक्तमिति तत्पुनरुक्तमिति चेन्न । आशुतिरोधीयमानानेकवर्णवत् घटकलशादिशब्दग्रहणसम्भवदर्शनाय तदुक्तेः । तस्य च पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्परासहकृतान्त्यवर्णबुद्ध्या निःशेषतः स्वरूपतो ऽर्थतश्च ग्राह्य इत्यर्थः । एवञ्च तादृशसंस्कारविशिष्टान्तःकरणसंयुक्तेन तादृशसंस्कारविशिष्टेन श्रोत्रेणान्त्यवर्णसम्बद्धेन वर्णसमुदायप्रतिबिम्बवदखण्डस्फोटरूपपदादि(२)प्रत्यक्षमिति तात्पर्यम् । नन्वेवं सर्वदा शब्दोपलम्भः स्यादत उक्तम्—*प्रयोगेणेति* । प्रयुज्यते इति प्रयोगो वर्णस्तेनाभिव्यक्त इत्यर्थः । अत एवोक्तम्—*आकाशेति* । एवञ्चैकत्राम्रफले एक एव यथा रूपरसगन्धादिस्तथा तदाश्रयस्यैकत्वात्तद्गतः शब्दोऽप्येक एव, तत्रैव तस्योपलम्भ इति भिन्नदेशोपलम्भ एवासिद्ध इति तात्पर्यम् । नन्वेकत्वेऽयं पूर्वोऽयं परोऽयं देवगृहेऽयं राजगृहे इत्यादिभेदावभासः कथमिति चेन्न । देशभेदेन प्रतिभासस्य भिन्नदेशावस्थितपुरुषोदीरितव्यञ्जकवर्णकृतत्वादौपाधिको भेदस्तु आकाशस्येव न शब्दस्याप्येकत्वे बाधकः । एवं संसर्गानित्यतापि तस्येवास्यापि न बाधिका । तस्यापि 'नीलं नभ' इत्यादिसंसर्गानित्यताप्रतीतेरिति तात्पर्यम् । अत्र शब्द इत्येकवचनेन स्फोटस्यैकत्वमखण्डत्वं च ध्वनितम् ।

तदेतत्सर्वमभिप्रेत्याविरोधाय निष्कृष्टमाह—*तत्रेति* । तयोर्मध्ये

(१) "अभिव्यक्तस्य पदादिरूपेण तु" इति ख० पु० (२) "पदाप्रत्यक्षम्" इति पाठान्तरम् ।

गेण वैखरीरूपेणाभिज्वलितः स्वरूपलाषितः कृत इत्यर्थः। अन्यथा कदम्बमुकुलादिन्यायेनानन्तशब्दजशब्दानां तत्प्रागभावध्वंसानां च तत्प्रत्यक्षानुपपत्त्या कल्पने गौरवं स्यात्। तत्र किञ्चिद्दूरदेशपर्यन्तमुत्पत्तिवन्ममाभिव्यक्तिरपि तावद्दूरपर्यन्तमेवेति न दोषः। अत एव कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रेण तद्ग्रहः। स्वसमवेतशब्दस्यैव तेन ग्रहात्॥

नन्वाकाशदेशः शब्द इत्यसङ्गतम्, आकाशसत्त्वे

( कुञ्जिकाटीका )

कमतं दूषयति—*अन्यथेति*। कदम्बपुष्पवत् दशदिक्सञ्चारिणो दश शब्दा उत्पद्यन्ते, ते च श्रोत्रेण सम्बद्धा गृह्यन्ते इत्यर्थः। आदिना वीचितरङ्गन्यायः। तद्यथा वीचिः प्रथममुत्पन्ना वीच्यन्तरं जनयति, एवं शब्दोऽप्याद्यः शब्दान्तरं जनयति, तदपि शब्दान्तरमित्येवं श्रोत्रसम्बन्धो भवति। *तत्प्रत्यक्षानुपपत्त्येति*। आद्यशब्दस्य श्रोत्रसम्बन्धाभावादिति भावः। ननु एकशब्दत्वे अतिदूरस्थस्यापि प्रत्यक्षापत्तिरत आह—*तत्रेति*। यथा तार्किकमते अतिदूरपर्यन्तं न शब्दोत्पत्तिस्तथास्मन्मतेऽभिव्यक्तिरपि नेत्यर्थः। *अत एव*—शब्दस्य व्यापकत्वादेव। *स्त्रम*। श्रोत्रम्, *तेन*-श्रोत्रेण॥

( कलाटीका )

इत्यर्थः। अत एव स्वयं तथैवोक्तम्। अन्यथा तत्स्थस्यैकस्य विभोस्तत्स्यानङ्गीकारे। सर्वत्र भेदस्यौपाधिकस्यैव सत्त्वेन तस्यैव च व्यवहारोपयोगित्वेनौपाधिकभेदेन भेदस्य दुर्वारत्वेन पृथिव्याः सुम्नादिदेशभेदेन भेदवदाकाशस्यापि घटादिभेदेन भेदादिति यावत्। आदिना वीचितरङ्गन्यायः। *तत्प्रेति*। पदादिशब्देत्यर्थः। ननु विभुत्वे रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणापत्तिरत आह—*तत्रेति*। फलबलकल्प्यत्वरूपयुक्तेरन्यत्र दूरत्वस्य प्रतिबन्धकत्वस्य च तुल्यत्वादिति भावः। उक्तं पोषयति—*अत एवेति*। तत्स्थत्वेन तत्त्वादेवेत्यर्थः। *स्वसमेति*। अन्यथाऽतिप्रसङ्ग उक्त एव। उक्तन्यायेन तदुपपादनेऽपि तत्र तत्त्वाभाव एवेति भावः।

प्रसङ्गादइउण्सूत्रस्थभाष्योक्तौ शङ्कते—*नन्वित्यादिना*। नैया-

मानाभावात् । न च शब्दगुणितया तत्सिद्धिः । शब्द-स्याकाशगुणत्वासिद्धेः । स्पर्शवद्द्रव्यविशेषगुणत्वस्यैव

( कुञ्जिकाटीका )

शब्दाश्रयतयाऽतिरिक्तं द्रव्यमाकाशमिति तार्किकमतं निराकरोति-*न चेति* । असिद्धेरित्यत्र हेतुमाह-*स्पर्शेति* । स्पर्शवतः पृथि-

( कलाटीका )

यिकमतमाह—*न चेति* । शब्दगुणतयेति पाठः । गुणितयेति पाठे नीलरूपवदिति वत्प्रयोगः । वस्तुतस्तु शब्दस्य गुणितयेत्यर्थः । शब्दनिष्ठगुणतानिरूपिता या गुणिता तयेति यावत् । "शब्दो गुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत् । घटादावव्यभिचाराय—चक्षुरिति । आत्मन्यव्यभिचाराय—बहिरिति । रसत्वादावव्यभिचाराय—जातिमदिति । इति तत्र गुणत्वे सिद्धे, शब्दो विशेषगुणः लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणयोग्यताराहित्ये च सति गुणत्वव्याप्यजातिमत्त्वात् रूपवत् । प्रभात्वेनाव्यभिचाराय-गुणत्वव्याप्येति । गुरुत्वत्वेनाव्यभिचारायाऽऽद्यसत्यन्तम् । संख्यात्वेनाव्यभिचाराय द्वितीयसत्यन्तमिति विशेषगुणत्वसिद्ध्याग्रिमानुमाने स्वरूपासिद्धिनिरासे सिद्धे, "शब्दः समवेतः गुणत्वात्तद्वदि"ति, तत्र समवेतत्वे सिद्धे परिशेषानुमाने हेतौ विशेष्यासिद्धिनिरासे च सिद्धे विशेषणासिद्धिनिरासाय स्वीक्रियमाणेन "शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकत्वे च सति प्रत्यक्षत्वात् सुखवत्" । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणाय—अकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय—प्रत्यक्षेति । इत्यनेन पृथिव्यादिचतुष्टयाश्रितत्वे निरस्ते,"न स दिक्कालमनो गुणः विशेषगुणत्वात् रूपवदिति"कालादित्रितयाश्रितत्वे निरस्ते, "न स आत्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात्तद्वत्" । अत्र मनोभिन्नेन्द्रियं बहिरिन्द्रियम् । एतेनात्मगुणग्राहकेन्द्रियत्वं तत्त्वम् तच्च मनस्यपि, तेनापि रूपादिग्रहणादित्यपास्तम् । इत्यात्माश्रयत्वे निरस्ते ऽर्थान्नवमस्य शब्दाधिकरणस्य द्रव्यस्याकाशाख्यस्य, "शब्दः वाय्वाद्यष्टद्रव्यान्यद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादि"ति परिशेषानुमानेन सिद्धिरिति भावः । *असिद्धेरिति* । उक्तानुमानस्य बाधस्वरूपासिद्धिभ्यां पराहतत्वात् । तथाच

शब्देऽङ्गीकारात् । न च (१)यावद्द्रव्यभावितयाऽऽश्रया-
दन्यत्रानुपलम्भापत्तिः, तादृशनियमानङ्गीकारात् । न-
चाप्यन्यदेशावच्छिन्नाकाशाश्रयस्य कर्णशष्कुल्यनवच्छि-

( कुञ्जिकाटीका )

व्यादिचतुष्टयस्य विशेषो वायुस्तस्य गुणः शब्द इत्यर्थः । पृथिव्या-मनुष्णाशीतस्पर्शस्वीकारस्तु त्वाचप्रत्यक्षे स्पर्शस्य हेतुत्वानुरोधात् ।

अत्र वैशेषिकाः-शब्दो न स्पर्शवतो विशेषगुणः, अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकत्वात्, यो हि पृथिव्यादेर्गुणः सोऽग्निसंयोगजन्यः । अथवा समवायिकारणगुणपूर्वकः । न च शब्दस्तथा । नापि वायुगुणः । आश्रयनाशजन्यनाशप्रतियोगित्वाभावादिति वदन्ति ।

तान्निराकरोति—*न च यावद्द्रव्येति* । यावद्द्रव्यं सकलद्रव्यम् । तथाच पृथिव्यादिगुणस्य स्वाश्रयमात्रवृत्तितयाऽन्यत्र प्रत्यक्षानापत्तिरित्यर्थः । *तादृशेति* । गुणिनिष्ठत्वमेव पृथिव्यादिगुणस्येति नियम इत्यर्थः । *अनङ्गीकारादिति* । पुष्पसौरभस्य वायुनानयनदर्शनात् । न च तत्र पुष्पावयवो ऽप्यायातीति वाच्यम् । पुष्पस्य लघुत्वापत्तेः । *आश्रयात्*-वायोः । *अन्यत्र*-आकाशे । यावद्द्रव्यभावितयेति तु त्वपपाठः । आश्रयनाशजन्यनाशप्रतियोगित्वं यावद्द्रव्यभावित्वमिति हि तार्किकाणां प्रसिद्धिस्ततश्चाश्रयादन्यत्रेत्यक्षरास्वारस्यम् ।

*तवापीति* । देशान्तरे उत्पन्नस्य शब्दस्य देशान्तरेऽप्युपल

(कलाटीका)

तद्विशेषगुणत्वं सुतरां नेति भावः । तदेवाह—*स्पर्शवद्द्रव्येति* । तद्वान् यो द्रव्यविशेषः पवनस्तद्गुणत्वेत्यर्थः । पवनावयवेषु सूक्ष्मशब्दक्रमेण पवने कारणगुणपूर्वकशब्दोत्पत्तेः । एवंच प्रागुक्ते ऽनुमाने स्पर्शवद्वायुगुणत्वस्य तत्र सत्वेन तदभावसाधने बाध इति भावः । कारणेत्युक्त्या तद्घटितहेतोरसिद्धिः सूचिता । अत्र बाधकमाह—*न च यावद्द्रव्येति* । स्वाश्रयनाशजन्यनाशप्रतियोगित्वेनेत्यर्थः । आश्रयात्—वायोः । अन्यत्र आकाशे । दृष्टं चेदं गन्धादौ । *तादृशेति* । आत्मविशेषगुणेषु आश्रयादन्यत्रानुपलम्भे ऽपि यावद्द्रव्यभावित्वाभावात् । एतेनायावद्द्रव्यभावित्वेन वायुविशेषगुणत्वासम्भव इति नैयायिको-

(१) यावद्द्रव्यभावितयेत्यस्यापपाठत्ववचनं कुञ्जिकायाम् ।

न उपलम्भात् । न च द्रव्यग्राहकेन्द्रियग्राह्यविशेषगुणयोगित्वमेव (१)स्पर्शवत्तामिति वाच्यम् । तस्य नियमस्य स्ववासनाकल्पितत्वात् । अत एव भाष्येऽपि "आकाशदेश" इत्येवोक्तं, न त्वाकाशगुण इति चेत्, न ।

आधारशक्तिः प्रथमा सर्वसंयोगिनामयम् ।
इदमत्रेति भावानामभावानां च कल्प्यते ॥
व्यपदेशस्तमाकाशनिमित्तं तु प्रचक्षते ।
कालात् क्रिया विभज्यन्ते आकाशात्सर्वमूर्त्तयः ॥

---

( कुञ्जिकाटीका )

म्भात्तार्किकाणामपि गुणिमात्रनिष्ठत्वनियमो नेत्यर्थः । *द्रव्यग्राहकेति*। चक्षुषा घटग्रहणानन्तरं संयुक्तसमवायेन तद्गुणप्रत्यक्षाद् गुणगुणिनोः समानेन्द्रियग्राह्यत्वमेवेत्यर्थः । *स्ववासनेति* । श्रोत्रेणाकाशस्याग्रहणेऽपि तद्गुणस्य शब्दस्य ग्रहणादिति भावः *आकाशदेश इति* । आकाशदेशावच्छेदेनेत्यर्थः । *आधारशक्तिरिति* । अस्य पूर्वार्धं तु—

आकाशमेव केषांचिद्देशभेदप्रकल्पनात् । इति ।

केषांचिन्मते संयोगिभेदेनाकाशस्य नानात्वादाकाशमेवाधिकरणमित्यर्थः । *सर्वसंयोगिनामिति* । अयम्भावः—यथा नक्षत्रादीनामधिकरणमाकाशं तथा पृथिव्यादिस्थानां रथादीनामपि मुख्यमधिकरणमाकाशम्, समवेतानां तु स्वाश्रयद्वारा परमाणौ विश्रामः, परमाणूनां चाकाशमेवाधिकरणमित्ययमाकाशः सर्वेषामाधारशक्तिमान् । अत्रैव लोकप्रसिद्धिमपि प्रमाणयति—*इदमत्रेतीति* । इह पक्षी, नेह पक्षी, इति प्रतीत्या आकाशस्यैवाधारत्वात् । यत्तु आकाशस्यातीन्द्रियतया इह नक्षत्रमिति प्रतीतेर्विषय आलोक एवेति । तन्न । 'इहालोकः' इति प्रतीत्यनापत्तेः । *व्यपदेश इति* । अयं यो व्यवहारस्तस्य निमित्तमाकाश-

( कलाटीका )

क्तमपास्तम् । बाधकान्तरमाह—*न च द्रव्येति* । (२)स्पर्शवद्द्रव्येत्यर्थलभ्यम् । पृथिव्यादित्रयग्राहकत्वकचक्षुर्ग्राह्यत्वस्य तदीयरूपस्पर्शयोर्वायुग्राहकत्वक्ग्राह्यत्वस्य तदीयस्पर्शे च (३)सत्त्वात् । तथा च शब्दस्य वायुविशेषगुणत्वे त्वक्ग्राह्यत्वस्य तत्राभावान्न तस्य तद्गुणत्वमिति तथैव वाच्यमिति भावः । *तस्येति* । आत्मन्यपि तस्य सत्त्वात्तद्ग्राह्यगन्धादिविशेषणयोगित्वस्यापि तत्र सत्त्वाच्चेति भावः । तस्य तत्त्वे भाष्यविरोधोऽपीत्याह—*अत एवेति* । तस्य तद्गुणत्वादेवेत्यर्थः । एतव्यावर्त्यमेवाह—*न त्विति* ।

---

(१) स्पर्शवत्त्वमिति ख॰ पु॰ । (२) "तत्तद्द्रव्यग्राहकनत्वादिन्द्रियेत्यर्थः । क्षादित्रय" इति पाठान्तरम् ।
(३) "सत्त्वेन" इति पाठान्तरम् ।

एतावानेव भेदोऽयमभेदोपनिबन्धनः। इति

हरिणैव समाधानात्। 'इदं नक्षत्रचक्रमत्र तिष्ठति' 'अत्रैतदभाव' इति निर्दिष्टवस्तुविषये पृथ्व्यादेराधारत्वासम्भवेन तदाधारस्यैवाकाशसंज्ञकत्वात्। एवं च पृथ्व्यादीनामपि परमाणुद्वारा स एवाधार इति सर्वभावानामाधारशक्तिराकाशाश्रया। आधारशक्तिरयमिति तु शक्तिशक्तिमतोरभेदादुक्तम्। एवं चाधारशक्त्यैवान्यथानुपपत्त्याऽऽकाशसद्भावावगमः। इदमाकाशस्याधारत्वं सिद्धस्वभाववस्तुविषयम्। साध्यस्वभावक्रियाविषयं तु कालस्याऽऽधारत्वमित्याह—कालादिति। जन्मस्थितिनिरोधेषूपकुर्वन् कालः क्रियाधार इति। एतच्चोपरिष्टात्

( कुञ्जिकाटीका )

मित्यर्थः। आकाशस्य सर्वाधारत्वं यदुक्तं तत्सिद्धविषयम्, साध्यस्वभावविषयं तु कालस्याधारत्वमित्याह—*कालादिति*। काल एव क्रियाया भेदक इत्यर्थः। कालाकाशादिभेदो व्यावहारिक एव, वास्तविकस्त्वभेद एव। *निबन्धनम्*—निमित्तम्। *विभज्यन्ते इति*। भेदेन व्यवाह्रियन्ते इत्यर्थः। *सर्वमूर्तयः*। सर्वपदार्थाः। पदार्थसत्तासत्तयोर्विभाजक आकाश एवेत्यर्थः।

*निर्दिष्टेति*। निर्दिष्टं यन्नक्षत्रादि तन्निरूपितमाधारत्वं पृथिव्यादेर्न सम्भवतीत्यर्थः। सर्वाधारत्वं घटयति—*एवं चेति*। पृथ्व्यादीनामेव(१)अवयवपरम्परया परमाणौ विश्रान्तिः, परमाणूनां चाधार आकाश एवेत्यर्थः। *इदमिति*। पूर्वोक्तव्यवहारसिद्धमित्यर्थः। साध्यस्वभावेत्यस्य विवरणं—*क्रियेति*। *जन्मास्थितीति। आद्यक्षणसम्बन्धो जन्म, तत्र काल एव निमित्तमित्यर्थः। *निरोधो*—नाशः।

आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः॥ इति॥

केचित्क्रियात्मकं कालमिच्छन्ति, तान्निराकरोति-*क्रियाधार इति*।

( कलाटीका )

असाधारणान्यथानुपपत्तिप्रदर्शनाय व्युत्क्रमेणास्यार्थमाह—*इदमित्यादिना*। भावांशं प्रदर्श्याभावांशमाह—*अत्रैतदिति*। आकाशप्रदेशविशेषे नक्षत्रचक्राभाव इत्यर्थः। वस्तु नक्षत्रचक्रम् प्रथमाऽर्द्धार्थमाह—*एवं चेति*। तदन्यथाऽनुपपत्त्या तत्सिद्धौ चेत्यर्थः। प्रथमेत्यस्यार्थमाह—*परमेति*। एवेनाधारान्तरकल्पनव्यवच्छेदः। सर्वसमित्यस्यार्थमाह—*सर्वेति*। सर्वपदार्थानामित्यर्थः। आकाशेत्यस्य

(१) 'अवयव' इति पदं क० ग० पुस्तके नास्ति।

स्फुटीभविष्यति । मूर्तिपदं क्रियातिरिक्तसर्वपदार्थ-बोधकम् । अयम्भेदः-आकाशः काल इति भेदः । एतावानेव-व्यावहारिक एव(१) । ननु किं तर्ह्ययं निर्निबन्धन एव नेत्याह—अभेदेति । भेदरहितं यद्ब्रह्म तदुपनिबन्धनं वस्तुभूतं यस्य स इत्यर्थः । ईश्वर एव तत्तदाधारत्वविशिष्टस्तत्तत्संज्ञां लभते इत्यर्थः(२) ।

( कुञ्जिकाटीका )

अयं घटो भवतीत्यादिप्रतीत्या कालस्यैवाधारत्वं न तु सूर्यपरिस्पन्दादेः, सूर्यनिष्ठस्य तस्याधारत्वासम्भवादिति भावः। मूर्तिशब्दस्य मूर्तधर्म एव तार्किकाणां प्रसिद्धत्वादाह-*मूर्तिपदमिति*। *व्यावहारिक एवेति*। अत एवोक्तं दीधितौ-"दिक्कालौ नेश्वरादतिरिच्येते, मानाभावात्" इति।'इदानीं घटः' 'तदानीं घटः' इति व्यवहारभेदस्तु भवतामिव ममाप्यौपाधिक इति भावः । *ईश्वर एवेति* । श्रोत्रमिति कर्णशष्कुल्यवच्छिन्न ईश्वर एवेति भावः । कार्यमात्रं प्रति ईश्वरस्य कारणता क्लृप्तैव । तत्र समवायित्वमात्रं स्वीक्रियत इति । न चेश्वरे शब्दसमवायस्वीकारे मनस्संयुक्तेश्वरसमवायसत्त्वात्तन्मानसापत्तिरिति वाच्यम् । परकीयज्ञानादिप्रत्यक्षवारणाय विजातीयसंयोगस्य हेतुतया

( कलाटीका )

(३) लिङ्गव्यत्ययेनान्वयादाह-*आकाशेति*। एवेन सर्वसंयोगिनां प्रथमाधारशक्तिराकाशनिमित्तेति इदमत्रेत्यनेन यो भावानां सतामभावानां च व्यपदेशः कल्प्यते तं तु तमपि आकाशनिमित्तं तन्निमित्तकं प्रचक्षते मुनयः कथयन्तीति वाच्यार्थः सूचितः। (४)नचैवमस्येत्युचितमत आह-*आधारेति*। प्रकृतं तात्पर्यार्थमाह-*एवं चेति*। तस्या अन्याधारत्वाभावे चेत्यर्थः। *निरोधो-नाशः। अत एव ततः क्रियाविभागः। *उपरिष्टात्*-धात्वर्थवादे। अनेन कथं तस्य तत्त्वमिति शङ्का समाहिता।

ननु परिच्छिन्नपरिमाणानामेव मूर्तित्वेन प्रागुक्तविरोधोऽत आ-

(१) "इदमाकाशसद्भावावगमः" । इति ख० पुस्तके संशोधित्रा टिप्पणीरूपेण बहिःप्रदेशे स्थापितं दृश्यते । (२) "तात्पर्यम्" इति ख० पु० ।

( ३ ) 'आकाशार्थकायमित्यस्य' इति पाठो दृश्यतेऽत्र । ( ४ ) नन्वेवमित्यपि पाठः ।

जलवायुतेजोधिष्ठानकान्याहङ्कारिकाण्येव(१)।

अत एव योगीन्द्रियाणामत्यन्तदूरदेशस्थविषयोपलब्धिजनकत्वम्, पृथ्व्यादिविकाराणां तावद् दूर(२)देशगमनासम्भवात्। अहङ्कारस्य तु अन्तःकरणपरिणामत्वादन्तःकरणस्य चाधुनापि(३)बहुदूरदेशगमनानुभवात् तद्विकाराहङ्कारविकाराणां तत्सम्भवात्।

( कुञ्जिकाटीका )

ति*। नासिकावच्छिन्नपृथिवीधर्मो घ्राणमित्यादिरीत्येत्यर्थः। यत्तु गन्धग्राहकत्वाद् घ्राणं पार्थिवमिति तार्किकास्तन्नेत्याह—*आहङ्कारिकाण्येवेति*। अयम्भावः—घ्राणादिना न्यूनपरिमाणेन महापरिमाणं गृह्यते, न महतो व्यापनं सम्भवति, अव्याप्यग्रहणे चातिप्रसङ्गस्तस्माद् भौतिकादतिरिक्तमिन्द्रियमिति।

*अत एवेति*। घ्राणस्य पार्थिवत्वेन देशान्तरे गमनाभावात्प्रत्यक्षं न स्यादित्यर्थः। *तावद्देशेति*। अत एव गोलकमेव चक्षुरिति बौद्धमतमपास्तम्। अहङ्कारो ऽहमिति प्रथमाध्यासः, स्वप्नावस्थायां नरस्य व्याघ्रत्वाभिमाने सति न नरोऽहमित्यभिमानो भवति। अतस्तन्नियमाय नियतविषयव्यापकोऽहङ्कारः स्वीकार्यः, स च बुद्धितत्त्वस्य परिणामः। जाग्रत्स्वप्नसुषुप्तिषु श्वासप्रश्वासदर्शनात्सव्यापारं यदनुवर्तते तद् बुद्धितत्त्वम्। *अन्तःकरणपरिणामत्वादिति*। मनोबुद्धिरहङ्कारश्चित्तं चेति चत्वारि अन्तःकरणानि गर्वरूपवृत्तिविशेषादहङ्कारसंज्ञां लभन्ते। *तद्विकारेति*। अन्तःकरणविकारो योऽहङ्कारस्तद्वि-

( कलाटीका )

दैकेति*। श्रोत्रैकेत्यर्थः। सम्भवत्यैकरूप्ये वैरूप्यस्यान्याय्यत्वादिति भावः। आहङ्कारिकत्वे हेतुरयम्।

इदं द्रढयति—*अत एवेति*। तत्रादौ (४)विपक्षे बाधकमाह—*पृथ्व्यादीति*। अस्यान्यथेत्यादिः, तन्न स्यात् इत्यन्तश्च, अन्यत्र तथा दृष्टत्वादिति भावः। अत एवेत्यस्यार्थमाह—*अहङ्कारस्येति*। ननु तन्मतेऽपि तेषां योगजधर्मप्रत्यासत्त्याऽलौकिकं प्रत्यक्षमित्युक्तमेवेति

(१) "अहङ्कारीण्येव" इति मुद्रितेऽमुद्रिते च क० ग० घ० पु० नास्ति।
(२) देशशब्दरहितः ख० पु० पाठः। (३) "नाति" इति क० ग० पु० पाठः।
(४) विपक्षे-बाधकपूर्वमत एवेत्यस्यार्थमाह—*पृथिव्यादिति*। इति पाठान्तरम्। ख० पु०।

योगस्तु प्रतिबन्धकतमोनिवर्तक एवेत्यग्रे निरूपयिष्यामः ॥

तत्तद्ग्राह्यगुणाधिष्ठानानि च तानि भूतानि । तेषु च ते गुणा अनुद्भूताः । तत्तद्गुणसामानाधिकरण्यात् पृथिव्यादिगतगुणग्रहणमिन्द्रियैः । एवं च श्रोत्रमेव चित्त-

( कुञ्चिकाटीका )

काराणामिन्द्रियाणामित्यर्थः । ननु न योगीन्द्रियाणां दूरदेशगमनं किन्तु योगजधर्म एव प्रत्यक्षे सहकारीत्याशङ्क्याह—*योगस्त्विति* । *तमोनिवर्तक इति* । सुषुप्तौ तमसो वृत्तिप्रतिबन्धकत्वदर्शनात् । ततश्च योगिनामपि इन्द्रियसम्बन्धादेव प्रत्यक्षं, भूतभविष्यतोरपि सूक्ष्मावस्थासन्निकर्षेण प्रत्यक्षम् । इन्द्रियाणामन्तर्बाहिर्भावत्वव्यवस्थितानां स्थिरा अविचालिनी धारणैकाग्र्यलक्षणो योगः ।

नन्विन्द्रियाणां गुणाश्रयत्वे चक्षुरादिना गन्धादीनामपि प्रत्यक्षापत्तिरत आह—*तत्तद्ग्राह्येति* । श्रोत्रग्राह्यस्य शब्दस्याश्रय आकाशः शब्दश्चानुद्भूत इति न सर्वदा प्रत्यक्षं, किं तु श्रोत्रशब्दयोः सम्बन्धे सति प्रत्यक्षमित्यर्थः । *अनुद्भूता इति* । तेन चक्षुरादौ न रूपादिप्रत्यक्षम् । ननु घ्राणस्य सम्बन्धो योगो द्रव्ये ऽस्ति न तु गन्ध इत्यत आह—*सामानाधिकरण्यादिति* । *श्रोत्रमेवेति* । अन्तःकरणमे-

( कलाटीका )

न दोषोऽत आह-*योगस्त्विति* । एवेन तस्य प्रत्यासत्तित्वव्यवच्छेदो गौरवाद्यापत्तेस्तदाह-*इत्यग्र इति* ।

नन्वत्र पक्षे भूतत्वं केषां (१)गन्धादीनां गुणत्वं च केषामत आह-*तत्तदिति* । (२)पृथिव्यादिरूपभूतानीत्यर्थः । अत्र मते इन्द्रियाणां स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वानियमादिति भावः । नन्वेवमिन्द्रियाणामपि पार्थिवत्वादिसिद्ध्या तेष्वपि तत्तद्गुणावश्यकत्वेन तेषामपि प्रत्यक्षत्वापत्तिरत आह-*तेषु चेति* । इन्द्रियेष्वित्यर्थः(३)। अनतिप्रसङ्गायोक्तप्रकारमेवाह-*तत्तदिति* । नन्वत्र पक्षे श्रोत्रस्य जन्यत्वेन नित्यत्वैकत्वविभुत्वाभावेन कथं दूरस्थशब्दप्रत्यक्षमत आह-*एवं चेति* तस्यान्तःकरणपरिणामाहङ्कारपरिणामत्वे चेत्यर्थः । अत एव केवलस्ववृत्तिपरम्परायां मानाभावादाह-*चित्तवृत्तीति* । तत्र तथात्वादिति

---

( १ ) गन्धादीनामित्यस्यस्थाने "शब्दादीनाम्" इति ख० पु० पाठः ।

( २ ) उक्तरूपश्रोत्रादीन्द्रियग्राह्यशब्दादिरूपतत्तद्गुणानामाधारभूतानि शब्दादिरूपभूतानीत्यर्थः । इति ख० पु० पाठः ।

( ३ ) शब्दादिभूतेष्वित्यर्थः इति ख० पु० पाठान्तरम् ।

वृत्तिसहकृतं (१)स्ववृत्तिपरम्परया शब्ददेशमागतं शब्दं गृह्णाति। अत एव तत्तद्देशवृत्तित्वेन (२)शब्दप्रतीतिः। यद्वा अणूनां सर्वशक्तीनां सर्वदेशव्यापितया तेजोनभ-आदिपरमाणूनां विषयदेशपर्यन्तं तत्तदिन्द्रियस्य तत्त-

( कुञ्जिकाटीका )

वेन्द्रियद्वारा विषयदेशे गत्वा गृह्णातीत्यर्थः। तार्किकमते मनःसंयोगस्यापि ज्ञानहेतुत्वादुक्तम्--*चित्तवृत्तीति*। एतन्मते वृत्तिरेवेन्द्रियसन्निकर्षः। *अत एवेति*। यदि हि श्रोत्रदेशे एव प्रत्यक्षं स्यात्तदा-ग्रामान्तरे शब्दः श्रूयते इति प्रतीतिर्न स्यादित्यर्थः। यद्यपि कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रस्य देशान्तरगमनं न सम्भवति तथापि श्रोत्रं परिच्छिन्नपरिमाणमित्युक्तमेव। वीचीतरङ्गादिन्यायेन श्रोत्रगतं शब्दान्तरं गृह्यत इति तु न युक्तम्। 'भेरीशब्दो मया श्रुतः' इत्यनुभवविरोधात्। भ्रमादिकल्पने बीजाभावात्। *सर्वशक्तीनाम्* । सर्वशक्तियुक्तानाम्। *नभआदीति*। नभःपरमाणूनामेव शब्ददेशे श्रोत्रत्वेन परिणाम इत्यर्थः। *परमाणूनामिति*। तत्तदिन्द्रियरूपेण परिणामादित्यत्रान्वयः। ननु परमाणूनामेवेन्द्रियत्वे असन्निकृष्टस्यापि प्रत्यक्षापत्तिरत आह--*विषयदेशेति*। प्रत्यक्षविषयदेशेत्यर्थः॥

( कलाटीका )

भावः। अनेन बाधिर्यापत्तिनिरासः। आगतं सदिति शेषः। नन्वेवं को विशेषो नैयायिकमतादत आह-*अत एवेति*। तदागमनस्य तत्रैवाङ्गीकारादेवेत्यर्थः। तन्मते तु तथा प्रतीतिर्न स्यादिति भावः। नाहङ्कारपरिणामत्वमिन्द्रियाणां तथाहि सति तेषां तत्तदधिष्ठानकत्वं क्लेशसाध्यमिति गौरवमित्यतो लाघवादणुपरिणामत्वमेव तेषामिति मतमाह--*यद्वेति* । *सर्वशक्तीनाम्*--तत एव सर्वस्थूलसृष्टेरणूनां शब्दतन्मात्रादिरूपाणाम्।

"अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः"

इति प्रागुक्तहर्युक्तेः। अत एवाह-*सर्वेति*। तत्तदधिष्ठानत्वसिद्ध्यर्थमाह—*तेज इति*। तज्जनकानां तेषामित्यर्थः। तत एव तदुत्पत्तेरिति भावः। तत्तदिन्द्रियरूपेण परिणामादित्यत्रान्वयः। अत एव व्यापकत्वादाह-*विषयेति*। अनतिप्रसङ्गायाह-*तत्तदिन्द्रियस्येति*।

(१) "सहकृतस्ववृ" इति ख० पु०। (२) "वर्तित्वेन" इति ख० पु० पाठः।

# काशीसंस्कृतसीरिज़-ग्रन्थमाला ।

इयं काशी–संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्त्तते ।

---

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीका-सहितम् । ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् (वैशेषिकं१)रु०२—०

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः–प्रथम भाग अव्ययीभावान्तः । ( व्याकरणं १ ) रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादि-समाप्तिपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुण-निरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रि-कृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया–तत्त्वचन्द्रि-कासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ )रु० ०—८

८ अलङ्कारप्रदीपः । श्रीविश्वेश्वरपाण्डेयनिर्मितः । (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः । महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः। (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-नि-म्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी शिशुहितैषिणी–टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली–न्यायचन्द्रिकाटीकाद्वयसहिता सटि-प्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे ह-रिहर–जयराम–प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यस-हितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवक-ण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—

१८ संक्षेपशारीरकम् । मधुसूदनीटीकासहितम् संपूर्ण (वेदान्त४) रु० ८—०

१९ लघुजूटिका-अर्थात् अखिलना परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः । (व्याकरणं २) रु० ०—८

२० कातीयेष्टिदीपकः । (दर्शपौर्णमासपद्धतिः) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । (कर्मकाण्डं) रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम् । श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया (संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । (स्तोत्रवि० १) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः । भाषाटीकासहितः । (बौद्धन्याय वि० १) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः । (व्याकरणं ३)रु०५—०

२४ न्यायवार्त्तिकतात्पर्यटीका । श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण (न्यायविभाग ३) रु० ६—०

२५ मीमांसान्यायप्रकाशः । (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः । (मीमांसा १) रु० २—०

२६ पौरोहित्यकर्मसारः । (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः । (कर्मकाण्डवि० ३) रु० ०—४

२७ लघुशब्देन्दुशेखरः । म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः । (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं०श्रीकनकलाल ठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् । (काव्य३) रु० १२-०

२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) यन्त्रस्थ

३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः । (न्यायं ४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या-तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ५) यन्त्रस्थ

३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः । (मीमां०२)रु०१—०

३३ [illegible] भाष्योपबृंहणम । परमर्षि-

५६ अलङ्कारशेखरः। केशवमिश्रकृतः। साहित्योपाध्याय श्री अनन्तराम-शास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः। (अलं० वि० १) रु० १-४

५७ शक्तिवादः। श्रीगदाधरभट्टाचार्यप्रणीतः। टीकात्रयोपेतः। कृष्णभट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः। (न्या० वि० ७) रु० २-०

५८ प्रौढमनोरमा। म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्यया समेता। म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता। श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता। श्रीयुतजगन्नाथशास्त्रिविरचितयाव्ययीभावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता (अव्ययीभावान्तः प्रथमो भागः) (व्याकरण वि० ९) रु० ५—०

५९ आपस्तम्बगृह्यसूत्रम्। श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम्। (कर्म० वि० ५) रु० ३—०

६० नाट्यशास्त्रम्। भरतमुनिप्रणीतम् (सम्पूर्णम्) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम्। (नाट्यशास्त्र वि० १) रु० ५—०

६१ काव्यालङ्कारः। श्रीभामहाचार्येण विनिर्मितः। काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भूमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभूषयद्भिः श्रीमदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्कथनेन सनाथीकृतः। (अलङ्कार वि० २) रु० १-८

६२ ब्रह्मवादः। गोस्वामि श्रीहरिरायजी महाराज विरचितः। श्रीगोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्यासमलङ्कृतः। तथा गोस्वामी श्रीव्रजनाथविरचितो ब्रह्मवादः। तथा शुद्धाद्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः। श्रीरघुनाथशास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम्। श्रीहरिशङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत भूमिकया विविधपरिशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः। (शुद्धाद्वैतसम्प्रदाय वि० १) रु० १—०

६३ प्रेमरसायनम्। श्रीविश्वनाथपण्डितरचितम् (का० वि० ८) रु० १—०